आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १७

# कृष्णयजुर्वेदीयश्वेताश्वतरोपनिष-
# च्छांकरभाष्योपेता ।

तथा

शंकरानन्दकृता श्वेताश्वतरोपनिषद्दीपिका ।
नारायणकृता श्वेताश्वतरोपनिषद्दीपिका ।
विज्ञानभगवत्कृतं श्वेताश्वतरोपनिषद्विवरणम् ।
एतत्पुस्तकचतुष्टयमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

विनायक गणेश आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८४९

खिस्ताब्दाः १९२७



मूल्यमाणकचतुष्टयाधिकं रूपकद्वयम् ( रु० ~~२-४~~ )
५·००

# आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| १ गणेशाथर्वशीर्षम्— सभाष्यम् । .... ... ... .... | ० | ६ |
| २ रुद्राध्यायः— सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः । | १ | ६ |
| ३ पुरुषसूक्तम्—सायणभाष्योपेतम् । .... .... .... | ० | ४ |
| ४ योगरत्नाकरः— वैद्यकशास्त्रीयग्रन्थोऽतीव पुरातनः । .... | ९ | ० |
| ५ ईशावास्योपनिषत्— सटीकशांकरभाष्याद्युपेता । .... .... | ० | १४ |
| ६ केनोपनिषत्— सटीकशांकरभाष्याद्युपेता । .... .... .... | १ | ० |
| ७ काठकोपनिषत्—टीकाद्वयसंहितशांकरभाष्योपेता । .... | १ | ४ |
| ८ प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... ... | १ | ० |
| ९ मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... .... | ० | १० |
| १० माण्डूक्योपनिषत्—सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता । | २ | ९ |
| ११ ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... .... | १ | ४ |
| १२ तैत्तिरीयोपनिषत् — सटीकशांकरभाष्याद्युपेता । ... .... | ३ | १२ |
| १३ तैत्तिरीयोपनिषद्भाष्यवार्तिकम्— सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ छान्दोग्योपनिषत्— सटीकशांकरभाष्योपेता । .... .... | ५ | ० |
| १५ बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । ... .... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्— भागत्रयात्मकम् । ... | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्— भाष्यदीपिकाद्युपेता । ... .... | २ | ४ |
| १८ सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ रसरत्नसमुच्चयः— श्रीमद्वाग्भटाचार्यविरचितः । वैद्यकग्रन्थः । | ३ | १२ |
| २० जीवन्मुक्तिविवेकः— विद्यारण्यविरचितः सटीकः । .... | ३ | १२ |
| २१ ब्रह्मसूत्राणि— सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ श्रीमच्छंकरदिग्विजयः—विद्यारण्यकृतः । टीकाटिप्पणीभ्यां सहितः । | ६ | ० |
| २३ वैयासिकन्यायमालाविस्तरः— भारतीतीर्थमुनिप्रणीतः । .... | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । .... | ८ | ० |
| २५ सूतसंहिता— माधवकृतटीकोपेता । भागत्रयात्मिका । .... | ११ | ८ |
| २६ हस्त्यायुर्वेदः— पालकाप्यमुनिविरचितः । .... .... | ७ | ६ |
| २७ वृन्दमाधवः— श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । ... | ६ | १२ |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| २८ ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । .... | ६ | ४ |
| २९ उपनिषदां समुच्चयः—श्रीनारायणशंकरानन्दकृतदीपिकासहितः। | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । .... ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् । .... | १० | १० |
| ३३ धनन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः । .... | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । .... .... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । .... .... | ६ | ४ |
| ३५ संगीतरत्नाकरः—शार्ङ्गदेवकृतः सटीको द्विभागः । गानशास्त्रम् । | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । .... | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् । .... | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । .... .... ... | ३ | ० |
| ३९ संस्काररत्नमाला—गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् .... .... | ९ | ४ |
| ४२ तैत्तरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । .... | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजिदीक्षितकृताः सटीकाः । | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । .... .... .... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता । .... .... | ९ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः—अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । .... | ९ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः । ... .... ... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । .... .... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । .... | ४ | ० |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । ... | ३ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः । ... .... | ४ | ० |
| ५९ श्राद्धमञ्जरी—वेळकरोपाह्वबापूभट्टविरचिता । ... .... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । .... .... .... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । .... .... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः—सटीकाः । | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । .... | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । .... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । .... .... .... .... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... .... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । .... ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । .... .... .... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । .... | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । .... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता । ... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । .... ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । ... | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । .... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... .... .... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... .... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । .... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... .... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... .... | ६ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... .... | २ | ० |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १७

# कृष्णयजुर्वेदीयश्वेताश्वतरोपनिष-
# च्छांकरभाष्योपेता ।

तथा

शंकरानन्दकृता श्वेताश्वतरोपनिषद्दीपिका ।

नारायणकृता श्वेताश्वतरोपनिषद्दीपिका ।

विज्ञानभगवत्कृतं श्वेताश्वतरोपनिषद्विवरणम् ।

एतत्पुस्तकचतुष्टयमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

## विनायक गणेश आपटे

इत्यनेन

पुण्याख्यपत्तने

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

---

शालिवाहनशकाब्दाः १८४९

खिस्ताब्दाः १९२७

---



मूल्यमाणकचतुष्टयाधिकं रूपकद्वयम् ( रु० २-४ ) ।

# श्वेताश्वतरोपनिषत्प्रस्तावः ।

भो भो विद्वद्वर्या इयं खल्वनाद्यध्यस्तजन्ममरणरूपाद्भवाब्धेस्तितीर्षूणां " ब्रह्मवादिनो वदन्तीत्युपक्रम्य—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ "

इत्यन्ता षडध्यायी श्वेताश्वतरोपनिषत्तरणिः सुप्रसिद्धा विराजते ।

अस्याश्च व्याख्याभूता ग्रन्थाः पुण्यपत्तन आनन्दाश्रममुद्रणालये तदधिपतिना ग्राहकेषु परमकृपालुतया विद्वद्भिः संशोध्याऽऽयसाक्षरैर्मुद्रयित्वा प्रकाशिताः ।

ते च—

कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषद्भाष्यम् ।
श्वेताश्वरोपनिषद्दीपिका शंकरानन्दकृता ।
श्वेताश्वतरोपनिषद्दीपिका नारायणविरचिता ।
श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतम् ।

अस्या उपनिषदो भाष्यं मुक्त्वेतरद्ग्रन्थत्रयमुपरिष्टाद्दर्शिततत्तत्प्रणेतृभिर्विरचितमिति निर्विवादं भाष्यं तु केन कृतमिति न ज्ञायते । यद्यप्युपनिषद्भाष्यपुस्तकान्ते शंकराचार्यविरचितमित्युपलभ्यते तथाऽप्येतन्न तत्कृतमिति निश्चीयते । कुतोऽयं निश्चय इति चेच्छ्रीमद्विद्यारण्यप्रणीतशंकरदिग्विजये षष्ठसर्गे श्रीमच्छंकराचार्यकृतोपनिषद्भाष्यादिनामनिर्देशसमये श्वेताश्वतरोपनिषद्भाष्यनामानिर्देशात् ।

तद्यथा—

" करतलकलिताद्वयात्मतत्त्वं क्षपितदुरन्तचिरंतनभ्रमोहम् ।
उपचितमुदितोदितैर्गुणौघैरुपनिषदामयमुज्जहार भाष्यम् " ॥ ६१ ॥

अत्र धनपतिसूरिकृतडिण्डिमाख्यटीकायामुपनिषदामित्येतत्पदव्याख्यान ईशादिबृहदारण्यान्तानां दशानामेवोपनिषदां संग्रहः कृतः । यदि श्वेताश्वतरोपनिषद्भाष्यं श्रीमच्छंकराचार्यैरेव प्रणीतं स्यात्तर्हि डिण्डिमकारेणास्या उपनिषदोऽप्युल्लेखः कृतो भवेत् ।

ततश्च तत्रैव—

" ततो महाभारतसारभूताः स व्याकरोद्भागवतीश्च गीताः ।
सनत्सुजातीयमसत्सुदूरं ततो नृसिंहस्य च तापनीयम् " ॥ ६२ ॥

एतच्छ्लोकाद्गीतादिभाष्यानन्तरं नृसिंहपूर्वतापनीयभाष्यमाचार्यकृतमिति ज्ञायते । तथाच केनमुण्डकप्रश्ननृसिंहपूर्वतापन्युपनिषत्स्वाचार्यकृतभाष्याणां विद्यमानत्वादाचार्यकृतभाष्यस्थबहुवाक्यानां नारायणविरचिततत्तदुपनिषद्दीपिकासु दृश्यमानत्वाच्च तासां दीपिकानामन्तिमश्लोकेषु च—

" नारायणेन रचिता शंकरोक्त्युपजीविना " इत्यर्धं विद्यते ।

तथैवाऽऽनन्दाश्रमे कासुचिद्धंसाद्युपनिषत्सु नारायणविरचिता दीपिका विद्यन्ते । एतासामाचार्यकृतभाष्याभावादेव तदन्तिमश्लोकेषु—

" नारायणेन रचिता श्रुतिमात्रोपजीविना "

एतादृगेवार्थं पद्यं नारायणेन व्यलेखि । तद्वच्छ्वेताश्वतरोपनिषद्दीपिकायामप्यन्तिमश्लोके नारायणेन " श्रुतिमात्रोपजीविना " इत्येव निवेशितमेतद्दीपिकायां च भाष्यस्थमेकमपि वाक्यं नैव दृश्यते । अनेनापि हेतुद्वयेनैतद्भाष्यस्यान्यकृतत्वमवसीयते ।

किंच नारायणविरचितश्वेताश्वतरोपनिषद्दीपिकायां षष्ठाध्याये—

" यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ "

इति विंशतितमर्ग्व्याख्यानान्ते—अयमर्थ आचार्यसंमतः । चर्मवदाकाशवेष्टनासंभववदविदुषो मोक्षासंभवश्रुतेरिति सर्वधर्मान्परित्यज्येतिश्लोके शांकरगीताभाष्य उक्तत्वात्—इति विद्यते ।

अस्या उपनिषद आचार्यकृतं भाष्यं यद्युपलभ्येत तदानीं शांकरगीताभाष्य उक्तत्वादित्ययं हेतुरसंगतः स्यात् । अपि चैतद्भाष्य आचार्यैरेतादृशार्थस्यैवोक्तत्वादित्यस्यैव हेतोर्वक्तुं शक्यत्वात् ।

अन्यच्च श्रीमच्छंकराचार्यप्रणीतदशोपनिषद्भाष्येषु शारीरादिभाष्येषु च यथा पदलालित्यार्थगाम्भीर्यसरलताप्रसन्नताप्रौढत्वविद्वज्जनमनोमोदकत्वादिगुणा अनुभूयन्ते न तथैतद्भाष्ये ।

एवं चेदं श्वेताश्वतरोपनिषद्भाष्यं केनापि विदुषा कृत्वा तदन्त आचार्यैरेतत्कृतमिति तन्नामालेखीत्यसंशयमवधार्यत इति सुधीभिराकलनीयम् ।

एवं यत्सूचनेनैतद्यथायथमालोचितं स आनन्दाश्रमाधिपतिः सततमेवमेव प्रोत्साहनेनास्माकं ज्ञानवृद्धिं कुर्वंश्चिरजीवी भूयादित्याशासते ।

आनन्दाश्रमस्थाः शास्त्रिणः ।

श्वेताश्वतरोपनिषद्भाष्यादीनामादर्शपुस्तकानि येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

(क.) इति संज्ञिता—श्वेताश्वतरोपनिषत्सभाष्या कलिकातामुद्रिता रा. रा. महादेव चिमणाजी आपटे इत्येतेषाम् ।

(ख.) इति संज्ञिता—श्वेताश्वतरोपनिषत्सभाष्या उज्जयिनीक्षेत्रवासिनां वे. शा. सं. सोरटीबुवा इत्येतेषाम् ।

(ग.) इति संज्ञिता—श्वेताश्वतरोपनिषत् । *

(घ.) इति संज्ञिता—श्वेताश्वतरोपनिषत्पुण्यपत्तननिवासिनां वे. शा. सं. थत्ते इत्युपाह्वानां नारायणशास्त्रिणाम् ।

(ङ.) इति संज्ञिता—श्वेताश्वतरोपनिषद्वटोदरनिवासिनां रा. रा. पटवर्धनोपाह्वानां कृष्णराव भीमाशंकर इत्येतेषाम् ।

(क.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीपिका शंकरानन्दकृता समूला दाक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्था डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्ता ।

(ख.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीपिका शंकरानन्दकृता समूला वैकुण्ठवासिनां वे. शा. संपन्नानां रामानुजीयानां राघवाचार्याणाम् ।

(क.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीपिका नारायणविरचिता समूला वे. शा. रा. पुण्यपत्तननिवासिनां साठे इत्युपाह्वानां दामोदरशास्त्रिणाम् । लेखनकालः शके १७२३ ।

(ख.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीपिका नारायणविरचिता इन्दूरपुरनिवासिनां रा. रा. किबेसाहेब इत्येतेषाम् ।

(ग.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीपिका नारायणविरचिता दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्था डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्ता ।

(घ.) इति संज्ञिता—श्वेताश्वतरोपनिषद्दीका नारायणविरचिता समूला उज्जयिनीक्षेत्रवासिनां वे. शा. सं. सोरटीबुवा इत्येतेषाम् ।

(क.) इति संज्ञितम्—श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतं मोहमयीनिवासिनां वे. शा. सं. जयकृष्णमहाराजानाम् ।

---

* अस्याः स्वामिनो नाम न ज्ञायते ।

(ख.) इति संज्ञितम्--श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतं पुण्यपत्तननिवासिनां पटवर्धनोपाह्वानां श्री. रा. रा. गोविन्दरावजी इत्येतेषाम् ।

(ग.) इति संज्ञितम्--श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतं समूलं बडलीग्रामनिवासिनां कैलासवासिनां वे. शा. सं. रा. रा. मार्तण्डदीक्षितानाम् ।

(घ.) इति संज्ञितम्--श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतं समूलं वटोदरनिवासिनां पटवर्धनोपाह्वानां रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

======

ॐ तत्सद्ब्रह्मणे नमः ॥

# अथ कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषच्छांकरभाष्योपेता ।

श्वेताश्वतरोपनिषद इदं विवरणमल्पग्रन्थं ब्रह्मजिज्ञासूनां सुखावबोधायाऽऽरभ्यते । चित्सदानन्दाद्वितीयब्रह्मस्वरूपोऽप्यात्मा स्वाश्रयया स्वविषययाऽविद्यया स्वानुभवगम्यया साभासया प्रतिबद्धस्वाभाविकाशेषपुरुषार्थः प्राप्ताशेषानर्थोऽविद्यापरिकल्पितैरेव साधनैरिष्टप्राप्तिं चापुरुषार्थं पुरुषार्थं मन्यमानो मोक्षार्थमलभमानो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणः सुरनरतिर्यगादिप्रभेदभेदितनानायोनिषु संचरन्केनापि सुकृतकर्मणा ब्राह्मणाद्यधिकारिशरीरं प्राप्त ईश्वरार्थकर्मानुष्ठानेनापगतरागादिमलोऽनित्यादिदर्शनेनोत्पन्नेहामुत्रार्थभोगविराग उपेत्याऽऽचार्यमाचार्यद्वारेण वेदान्तश्रवणादिनाऽहं ब्रह्मास्मीति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्यो वीतशोको भवति । अविद्यानिवृत्तिलक्षणस्य मोक्षस्य विद्याधीनत्वाद्युज्यते च तदर्थोपनिषदारम्भः । तथा तद्विज्ञानादमृतत्वम् । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । न चेदिहावेदीन्महती विनष्टिः । य एतद्विदुरमृतास्ते भवन्ति । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् । तं विदित्वा न लिप्यते कर्मणा पापकेन । तरति शोकमात्मवित् । निचाय्य तं मृत्युमुखात्प्रमुच्यते । एतद्यो वेद निहितं गुहायाम् । सोऽविद्याग्रन्थिं विकिरतीह सोम्य । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वमवैति । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथाः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । विद्ययाऽमृतमश्नुते । सर्वाणि रूपाणि विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति । अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति । तन्मया अमृता वै बभूवुः । तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः । य

एतद्विदुरमृतास्ते भवन्ति[1]। ईशं तं ज्ञात्वाऽमृता भवन्ति । तदेवोपयन्ति । निचाय्येमां शान्तिमत्यन्तमेति । तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति । ये पूर्वं देवा ऋषयश्च तं विदुः । तेषां शान्तिः शाश्वती नेतरेषाम् ।

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ॥
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं यतः[2] ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति सनातनम् ॥
सम्यग्दर्शनसंपन्नः कर्मभिर्न[3] निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
ज्ञानं निश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ॥

एवं मृत्युं जायमानं विदित्वा ज्ञानेन विद्वांस्तेज अभ्येति नित्यम् । न विद्यते ह्यन्यथा तस्य पन्थास्तं मत्वा कविरास्ते प्रसन्नः ॥

क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥
आत्मज्ञः शोकसंतीर्णो न बिभेति कुतश्चन ।
मृत्योः सकाशान्मरणादथवाऽन्यकृताद्भयात्[4] ॥
न जायते न म्रियते न बध्यो न च घातकः ।
न बध्यो बन्धकारी वा न मुक्तो न च मोक्षदः ॥

---

१ ख. °न्ति । नि° । २ क. ततः । ३ क. °र्न स ब° । ४ ख. °वाऽपि कृतान्तात् ।

पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् ।

एवं श्रुतिस्मृतीतिहासादिषु ज्ञानस्यैव मोक्षसाधनत्वावगमाद्युज्यत एवोपनिषदारम्भः। किंचोपनिषत्समाख्ययैव ज्ञानस्यैव परमपुरुषार्थसाधनत्वमवगम्यते। तथा हि—उपनिषदित्युपानिपूर्वस्य सदेर्विशरणगत्यवसादनार्थस्य रूपमाचक्षते। उपनिषच्छब्देन व्याचिख्यासितग्रन्थप्रतिपाद्यवस्तुविषया विद्योच्यते तादर्थ्याद्ग्रन्थोऽप्युपनिषत्। ये मुमुक्षवो दृष्टानुश्रविकाविषयवितृष्णाः सन्त उपनिषच्छब्दितविद्यां तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्विनाशात्परब्रह्म गमयितृत्वाद्गर्भजन्मजरामरणाद्युपद्रवावसादयितृत्वादुपनिषत्समाख्ययाऽप्यन्यकृतात्परं श्रेय इति ब्रह्मविद्योपनिषदुच्यते। ननु भवेदेवमुपनिषदारम्भो यदि विज्ञानस्यैव मोक्षसाधनत्वं भवेत्। न चैतदस्ति। कर्मणामपि मोक्षसाधनत्वावगमात्। अपाम सोमममृता अभूम। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिना। न त्वेतदस्ति। श्रुतिस्मृतिविरोधान्न्यायविरोधाच्च। श्रुतिविरोधस्तावत्—तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते। तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय। न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति। नास्त्यकृतः कृतेन।

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥
अज्ञानमलपूर्णत्वात्पुराणो मलिनः स्मृतः।
तत्क्षयाद्धि भवेन्मुक्तिर्नान्यथा कर्मकोटिभिः॥
प्रजया कर्मणा मुक्तिर्धनेन च सतां न हि।
त्यागेनैकेन मुक्तिः स्यात्तदभावे भ्रमन्त्यहो॥

कर्मोदये कर्मफलानुरागास्तथाऽनुयन्ति न तरन्ति मृत्युम्।
ज्ञानेन विद्वांस्तेज अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्थाः॥

एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते।
श्रमार्थमाश्रमाश्चापि वर्णानां परमार्थतः॥
आश्रमैर्न च वेदैश्च यज्ञैः सांख्यैर्व्रतैस्तथा।
उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि।
न लभन्ते तमात्मानं लभन्ते ज्ञानिनः स्वयम्॥

---

१ क. °नाशनात्प°। २ क. °णाद्यप्रवृत्तस्याव°। ३ क. °र्मजितो ४ क. °ण्यजितो।

त्रयीधर्ममधर्मार्थं किंपाकफलसंनिभम् ।
नास्ति तात सुखं किंचिदत्र दुःखशताकुले ॥
तस्मान्मोक्षाय यतता कथं सेव्या मया त्रयी ।
अज्ञानपाशबद्धत्वादमुक्तः पुरुषः स्मृतः ॥
ज्ञानात्तस्य निवृत्तिः स्यात्प्रकाशात्तमसो यथा ।
तस्माज्ज्ञानेन मुक्तिः स्यादज्ञानस्य परिक्षयात् ॥
व्रतानि दानानि तपांसि यज्ञाः सत्यं च तीर्थाश्रमकर्मयोगाः ।
स्वर्गार्थमेवाशुभमध्रुवं च ज्ञानं ध्रुवं शान्तिकरं महार्थम् ॥
यज्ञैर्देवत्वमाप्नोति तपोभिर्ब्रह्मणः पदम् ।
दानेन विविधान्भोगाञ्ज्ञानान्मोक्षमवाप्नुयात् ॥
धर्मरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः ।
द्वयं ज्ञानासिना छित्त्वा विदेहः शान्तिमृच्छति ॥
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

एवं श्रुतिस्मृतिविरोधान्न कर्मसाधनममृतत्वं न्यायविरोधाच्च। कर्मसाधनत्वे मोक्षस्य चतुर्विधक्रियान्तर्भावादनित्यत्वं स्यात्। यत्कृतकं तदनित्यमिति कर्मसाध्यस्य नित्यत्वादर्शनात् । नित्यश्च मोक्षः सर्ववादिभिरभ्युपगम्यते । तथा च श्रुतिश्चातुर्मास्यप्रकरणे—प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति । किंच, सुकृतमिति सुकृतस्याक्षयत्वमुच्यते । सुकृतशब्दश्च कर्मणि । नन्वेवं तर्हि कर्मणां देवादिप्राप्तिहेतुत्वेन बन्धहेतुत्वमेव । सत्यम् । स्वतो बन्धहेतुत्वमेव । तथा च श्रुतिः—"कर्मणा पितृलोकः सर्व एते पुण्यलोका भवन्ति । इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ।

एवं कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते " इति ।

यदा पुनः फलनिरपेक्षमीश्वरार्थं कर्मानुतिष्ठन्ति तदा मोक्षसाधनज्ञानसाधनान्तःकरणशुद्धिसाधनपारम्पर्येण मोक्षसाधनं भवति । तथाऽऽह भगवान्—

' ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

१ ख. तं त्यज । २ ख. °तत्वस्य । न्या° । ३ ख. ज्ञानात्मकोऽयं । ४ ख. °दाऽन्तः° ।

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ' इति ॥

तथा च मोक्षे क्रमं शुद्ध्यभावे मोक्षाभावं कर्मभिश्च तच्छुद्धिं दर्शयति श्रीविष्णुधर्मे--

अनूचानस्ततो यज्वा कर्मन्यासी ततः परम् ।
ततो ज्ञानित्वमभ्येति योगी मुक्तिं क्रमाल्लभेत् ॥
अनेकजन्मसंसारचिते पापसमुच्चये ।
नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः ॥
जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
पापकर्माशयो ह्यत्र महामुक्तिविरोधकृत् ।
तस्यैव शमने यत्नः कार्यः संसारभीरुणा ॥
सुवर्णादिमहादानपुण्यतीर्थावगाहनैः ।
शारीरैश्च महाक्लेशैः शास्त्रोक्तैस्तच्छमो भवेत् ॥
देवताश्रुतिसच्छास्त्रश्रवणैः पुण्यदर्शनैः ।
गुरुशुश्रूषणैश्चैव पापबन्धः प्रशाम्यति ॥

याज्ञवल्क्योऽपि शुद्ध्यपेक्षां तत्साधनं च दर्शयति--

कर्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात्स्वतन्त्रीकरणाय च ॥
मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ।
तथाऽविपक्ककरण आत्मज्ञानस्य न क्षमः ॥
आचार्योपासनं वेदशास्त्रार्थस्य विवेकिता ।
सत्कर्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः ॥
स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम् ।
त्यागः परिग्रहाणां च जीर्णकाषायधारणम् ॥
विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनम् ।
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥

नीरजस्तमसा सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धसत्त्वयोग्यमृती भवेत् ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ॥
वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥

तथाचाऽऽथर्वणे विशुद्ध्यपेक्षमात्मज्ञानं दर्शयति—

जन्मान्तरसहस्रेषु यदा क्षीणास्तु किल्बिषाः ।
तदा पश्यन्ति योगेन संसारोच्छेदनं महत् ॥

यस्मिन्विशुद्धे विरजे च चित्ते य आत्मवत्पश्यन्ति यतयः क्षीणदोषाः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति बृहदारण्यके विविदिषाहेतुत्वं यज्ञादीनां दर्शयति । ननु विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । तपो विद्या च विप्रस्य नैःश्रेयसकरं परमित्यादिना कर्मणामप्यमृतत्वप्राप्तिहेतुत्वमवगम्यते । सत्यम् । अवगम्यत एव तदपेक्षितशुद्धिद्वारेण न च साक्षात् । तथाहि—विद्यां चाविद्यां च । तपो विद्या च विप्रस्य नैःश्रेयसकरं परमित्यादिना ज्ञानकर्मणोर्निःश्रेयसहेतुत्वमभिधाय कथमनयोस्तद्धेतुत्वमित्याकाङ्क्षायां तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इतिवाक्यशेषेण कर्मणः कल्मषक्षयहेतुत्वं विद्याया अमृतप्राप्तिहेतुत्वं प्रदर्शितम् । यत्र तु शुद्ध्याद्यवान्तरकार्यानुपदेशस्तत्रापि शाखान्तरोपसंहारन्यायेनोपसंहारः कर्तव्यः । ननु कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा इति यावज्जीवकर्मानुष्ठाननियमे सति कथं विद्याया मोक्षसाधनत्वम् । उच्यते—कर्मण्यधिकृतस्यायं नियमो नानधिकृतस्यानियोज्यस्य ब्रह्मवादिनः । तथाच विदुषः कर्मानधिकारं दर्शयति श्रुतिः—नैतद्विद्वानृषिणा विधेयो न रुध्यते विधिना शब्दचारः । एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति ॥ यथाऽऽह भगवान्—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥

१ क. °श्यति यो° । २ क. °सारच्छे° । ३ ख. °स्म त° ।

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

तथाचाऽऽह भगवान्परमेश्वरो लैङ्गे कालकूटोपाख्याने—

ज्ञानेनैतेन विप्रस्य त्यक्तसङ्गस्य देहिनः ।
कर्तव्यं नास्ति विप्रेन्द्रा अस्ति चेत्तत्त्वविन्न च ॥
इह लोके परे चैव कर्तव्यं नास्ति तस्य वै ।
जीवन्मुक्तो यतस्तु स्याद्ब्रह्मवित्परमार्थतः ॥
ज्ञानाभ्यासरतो[1] नित्यं विरक्तो ह्यर्थवित्स्वयम् ।
कर्तव्याभावमुत्सृज्य ज्ञानमेवाधिगच्छति ॥
वर्णाश्रमाभिमानी यस्त्यक्त्वा ज्ञानं द्विजोत्तमाः ।
अन्यत्र रमते मूढः सोऽज्ञानी नात्र संशयः ॥
क्रोधो भयं तथा लोभो मोहो भेदो[2] मदस्तमः ।
धर्माधर्मौ च तेषां हि तद्वशाच्च तनुग्रहः ॥
शरीरे सति वै क्लेशः सोऽविद्यां संत्यजेत्ततः ।
अविद्यां विद्यया हित्वा स्थितस्यैवेह योगिनः ॥
क्रोधाद्या नाशमायान्ति धर्माधर्मौ च नश्यतः[3] ।
तत्क्षयाच्च शरीरेण न पुनः संप्रयुज्यते ॥
स एव मुक्तः संसाराद्दुःखत्रयविवर्जितः ।

तथा शिवधर्मोत्तरे—ज्ञानामृतस्य (तेन) तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥
लोकद्वयेऽपि[4] कर्तव्यं किंचिदस्य न विद्यते ।
इहैव स विमुक्तः स्यात्संपूर्णः समदर्शनः ॥

तस्माद्विदुषः कर्तव्याभावादविद्यावद्विषय एवायं कुर्वन्नेवेत्यादिकर्मनियमः । कुर्वन्नेवेति च नायं कर्मनियमः किंतु विद्यामाहात्म्यं दर्शयितुं यथाकामं कर्मानुष्ठानमेव द्रष्टव्यम् । एतदुक्तं भवति—यावज्जीवं यथाकामं पुण्यपापादिकं कुर्वत्यपि विदुषि न कर्मलेपो भवति विद्यासामर्थ्यादिति । तथा हि—ईशावास्यमिद<sup></sup>ꣳ सर्वमित्यारभ्य तेन त्यक्तेन भुञ्जीथा इति विदुषः सर्वकर्मत्यागेनाऽऽत्मपालनमुक्त्वाऽनियोज्ये ब्रह्मविदि त्यागकर्तव्यतोक्तिरप्ययुक्तैवोक्तेति मत्वा चकितः सन्वेदो विदुषस्त्यागकर्तव्यतामपि नोक्तवान् । कुर्वन्नेवेह लोके विद्यमानं

१ क. °तो यस्तु सर्वतत्त्वार्थ° । २ क. भेदेक्षणं तमः । ३ क. देहजौ । ४ क. °येन क° । ५ ख. नाऽऽह ।

पुण्यपापादिकं कर्म यावज्जीवं जिजीविषेत् । न पुण्यादिबन्धभयात्पुण्यादिकं त्यक्त्वा तूष्णीमवतिष्ठेत । एवं तावत्कर्माणि कुर्वत्यपि विदुषि त्वयीतो यावज्जीवानुष्ठानादन्यथाभावः स्वरूपात्प्रच्युतिः पुण्यादिनिमित्तसंसारान्वयो नास्ति । अथवेतः कर्मानुष्ठानोत्तरकालभाव्यन्यथाभावः संसारान्वयो नास्ति । यस्मात्त्वयि विन्यस्तं न कर्म लिप्यते । तथा च श्रुत्यन्तरम्—न लिप्यते कर्मणा पापकेन । एवंविदि पापं कर्म न श्लिष्यते । नैनं कृताकृते तपतः । एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते ।

लैङ्गे—ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥
ज्ञानिनः सर्वकर्माणि जीर्यन्ते नात्र संशयः ।
क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि ॥

शिवधर्मोत्तरेऽपि—तस्माज्ज्ञानासिना तूर्णमशेषं कर्मबन्धनम् ।
कामाकामकृतं छित्त्वा शुद्धश्चाऽऽत्मनि तिष्ठति ॥
यथा वह्निर्महान्दीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहते क्षणात् ॥
पद्मपत्रं यथा तोयैः स्वस्थैरपि न लिप्यते ।
शब्दादिविषयाम्भोभिस्तद्वज्ज्ञानी न लिप्यते ॥
यद्वन्मन्त्रबलोपेतः क्रीडन्सर्पैर्न दश्यते ।
क्रीडन्नपि न लिप्येत तद्वदिन्द्रियपन्नगैः ॥
मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ।
तद्वत्सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात् ॥

तथा च सूत्रकारः—पुरुषार्थोऽतःशब्दादिति बादरायण इति ज्ञानस्यैव परमपुरुषार्थहेतुत्वमभिधाय शेषत्वात्पुरुषार्थवाद इत्यादिना कर्मापेक्षितकर्तृप्रतिपादकत्वेन विद्यायाः कर्मशेषत्वमाशङ्क्याधिकोपदेशात्तु बादरायणस्येत्यादिना कर्तृत्वादिसंसारधर्मरहितापहतपाप्मादिरूपब्रह्मोपदेशात्तद्विज्ञानपूर्विका तु कर्माधिकारसिद्धिं त्वाशासानस्य कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्ददर्शनात्कर्माधिकारोच्छित्तिप्रसङ्गाद्भिन्नप्रकरणत्वाद्भिन्नकार्यत्वाच्च परस्परविकल्पः समुच्चयोऽङ्गाङ्गिभावो वा नास्तीति प्रतिपाद्यात एवाग्नीन्धनाद्यनपेक्षेति विद्याया एव परमपुरुषार्थहेतुत्वादग्नीन्धनाद्याश्रमकर्माणि विद्यायाः स्वार्थसिद्धौ नापेक्षितव्यानीति पूर्वोक्तस्याधिकरणस्य फलमुपसंहृत्यात्यन्तमेवानपेक्षायां प्राप्तायां सर्वापेक्षा च यज्ञादिश्रु-

१ ख. तूर्णं निःशे° । २ क. °ह्यादीप्तः । ३ ख. नीरैः । ४ क. °षधब° ।

तेरश्ववदिति नात्यन्तमनपेक्षा । उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते । उत्पत्तिं प्रत्यपेक्षत एव । विविदिषन्ति यज्ञेनेति श्रुतेरिति विविदिषासाधनत्वेन कर्मणामुपयोगं दर्शितवान् । तथा च नाविशेषात्स्तुतयेऽनुमतिर्वेतिसूत्रद्वयेन कुर्वन्नेवेतिमन्त्रस्याविद्वद्विषयत्वेन विद्यास्तुतित्वेन चार्थद्वयं दर्शितवान् । अत उक्तेन प्रकारेण ज्ञानस्यैव मोक्षसाधनत्वाद्युक्तः परोपनिषदारम्भः । ननु बन्धस्य मिथ्यात्वे सति ज्ञाननिवर्त्यत्वेन ज्ञानादमृतत्वं स्यात् । न त्वेतदस्ति । प्रतिपन्नत्वाद्बाधाभावाद्युष्मदादिस्वरूपत्वेनाऽऽत्मनो विलक्षणत्वे सादृश्याद्यभावादध्यासासंभवाच्च । उच्यते—न तावत्प्रतिपन्नत्वेन सत्यत्वं वक्तुं शक्यते । प्रतिपत्तेः सत्यत्वमिथ्यात्वयोः समानत्वात् । नापि बाधाभावात्सत्यत्वम् । विधिमुखेन कारणमुखेन च बाधसंभवात् । तथा हि श्रुतिः प्रपञ्चस्य मिथ्यात्वं मायाकारणत्वं च दर्शयति नतु तद्द्वितीयमस्ति । एकत्वम् । नास्ति द्वैतम् । कुतो विदिते वेद्यं नास्ति । एकमेवाद्वितीयम् । वाचाऽऽरम्भणं विकारो नामधेयम् । एकमेव सन्नेह नानाऽस्ति किंचन । एकधैवानुद्रष्टव्यम् । मायां तु प्रकृतिं विद्यात् । मायी सृजते विश्वमेतत् । इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिभिर्वाक्यैः । अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया । अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥ तथा च ब्राह्मे पुराणे—

धर्माधर्मौ जन्ममृत्यू सुखदुःखेषु कल्पना ।
वर्णाश्रमास्तथा वासः स्वर्गो नरक एव च ॥
पुरुषस्य न सन्त्येते परमार्थस्य कुत्रचित् ।
दृश्यते च जगद्रूपमसत्यं सत्यवन्मृषा ॥
तोयवन्मृगतृष्णा तु यथा मरुमरीचिका ।
रौप्यवत्कीकसं भूतं कीकसं शुक्तिरेव च ॥
सर्पवद्रज्जुखण्डश्च निशायां वेश्ममध्यगः ।
एक एवेन्दुर्द्वौ व्योम्नि तिमिराहतचक्षुषः ॥
आकाशस्य घनीभावो नीलत्वं स्निग्धता तथा ।
एकश्च सूर्यो बहुधा जलाधारेषु दृश्यते ॥
आभाति परमात्माऽपि सर्वोपाधिषु संस्थितः ।
द्वैतभ्रान्तिरविद्याख्या विकल्पो न च तत्तथा ॥
परत्र बन्धागारः स्यात्तेषामात्माभिमानिनाम् ।
आत्मभावनया भ्रान्त्या देहं भावयतः सदा ॥

अभ्रज्ञैरादिमध्यान्तैर्भ्रमभूतैस्त्रिभिः सदा ।
जाग्रत्स्वप्नसुषुप्तैस्तु च्छादितं विश्वतैजसम् ॥
स्वमायया स्वमात्मानं मोहयेद्द्वैतरूपया ।
गुहागतं स्वमात्मानं लभते च स्वयं हरिम् ॥
व्योम्नि वज्रानलज्वालाकलापो विविधाकृतिः ।
आभाति विष्णोः सृष्टिश्च स्वभावो द्वैतविस्तरः ॥
शान्ते मनसि शान्तश्च घोरे मूढे च तादृशः ।
ईश्वरो दृश्यते नित्यं सर्वत्र न तु तत्त्वतः ॥
लोहमृत्पिण्डहेम्नां च विकारो न च विद्यते ।
चराचराणां भूतानां द्वैतता न च सत्यतः ॥
सर्वगे तु निराधारे चैतन्यात्मनि संस्थिता ।
अविद्या द्विगुणां सृष्टिं करोत्यात्मावलम्बनात् ॥
सर्पस्य रज्जुता नास्ति नास्ति रज्जौ भुजंगता ।
उत्पत्तिनाशयोर्नास्ति कारणं जगतोऽपि च ॥
लोकानां व्यवहारार्थमविद्येयं विनिर्मिता ।
एषा विमोहिनीत्युक्ता द्वैताद्वैतस्वरूपिणी ॥
अद्वैतं भावयेद्ब्रह्म सकलं निष्कलं सदा ।
आत्मज्ञः शोकसंतीर्णो न बिभेति कुतश्चन ॥
मृत्योः सकाशान्मरणादथवाऽन्यकृताद्भयात् ।
न जायते न म्रियते न बध्यो न च घातकः ॥
न बद्धो बन्धकारी वा न मुक्तो न च मोक्षदः ।
पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् ॥
एवं बुद्ध्वा जगद्रूपं विष्णोर्मायामयं मृषा ।
भोगासङ्गाद्भवेन्मुक्तस्त्यक्त्वा सर्वविकल्पनाम् ॥
त्यक्तसर्वविकल्पश्च स्वात्मस्थं निश्चलं मनः ।
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानलः ॥
एषा चतुर्विंशतिभेदभिन्ना माया परा प्रकृतिस्तत्समुत्थौ ।
कामक्रोधौ लोभमोहौ भयं च विषादशोकौ च विकल्पजालम् ॥
धर्माधर्मौ सुखदुःखे च सृष्टिविनाशपाकौ नरके गतिश्च ।

---

१ ख. आप्राज्ञै° । २ क. हरिः । ३ ख. °ते ह्यात्मा सर्वदा न । ४ क. देह° । ५ क. गात्र-भाजनभेदतः ।

वासः स्वर्गे जातयश्चाऽऽश्रमाश्च रागद्वेषौ विविधा व्याधयश्च ॥
कौमारतारुण्यजरावियोगसंयोगभोगानशनव्रतानि ।
इतीदमीदृग्विदयं निधाय तूष्णीमासीनः सुमतिं[1] विविद्धि ॥

तथा च श्रीविष्णुधर्मे षडध्याय्याम्—

अनादिसंबन्धवत्या क्षेत्रज्ञोऽयमविद्यया ।
युक्तः पश्यति भेदेन ब्रह्म तत्त्वात्मनि[2] स्थितम् ॥
पश्यत्यात्मानमन्यच्च यावद्वै परमात्मनः ।
तावत्संभ्राम्यते जन्तुर्मोहितो निजकर्मणा ॥
संक्षीणाशेषकर्मा तु परं ब्रह्म प्रपश्यति ।
अभेदेनाऽऽत्मनः शुद्धं शुद्धत्वादक्षयो भवेत् ॥
अविद्या च क्रियाः सर्वा विद्या ज्ञानं प्रचक्षते ।
कर्मणा जायते जन्तुर्विद्यया च विमुच्यते ॥
अद्वैतं परमार्थो हि द्वैतं तद्भिन्न[3] उच्यते ।
पशुतिर्यङ्मनुष्याख्यं[4] तथैव नृप नारकम्[5] ॥
चतुर्विधोऽपि[6] भेदोऽयं मिथ्याज्ञाननिबन्धनः ।
अहमन्योऽपरश्चायममी चात्र तथाऽपरे ॥
अज्ञानमेतद्द्वैताख्यमद्वैतं श्रूयतां परम् ।
मम त्वहमिति प्रज्ञावियुक्तमविकल्पवत् ॥
अविकार्यमनाख्येयमद्वैतमनुभूयते ।
मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः ॥
मनसो वृत्तयस्तस्माद्धर्माधर्मनिमित्तजाः ।
निरोद्धव्यास्तन्निरोधे द्वैतं नैवोपपद्यते ॥
मनोदृष्टमिदं सर्वं यत्किंचित्सचराचरम् ।
मनसो ह्यमनीभावेऽद्वैतभावं तदाप्नुयात् ॥
कर्मणां[7] भावना येयं सा ब्रह्मपरिपन्थिनी ।
कर्मभावनया तुल्यं विज्ञानमुपजायते ॥
तादृग्भवति विज्ञप्तिर्यादृशी खलु भावना ।
क्षये तस्याः परं ब्रह्म स्वयमेव प्रकाशते ॥
परात्मनो मनुष्येन्द्र विभागोऽज्ञानकल्पितः ।

---

१ क. °तिं च विद्वान् । २ ख. तत्स्वात्म° । ३ ख. तद्भेद । ४ क. °ष्याख्यस्तथै° । ५ क. नारकः । ६ क. °मपि भूपते । ७ क. °र्मणो भा° ।

क्षये तस्याऽऽत्मपरयोरविभागोऽत एव हि ॥
आत्मा क्षेत्रज्ञसंज्ञो हि संयुक्तः प्राकृतैर्गुणैः ।
तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥

तथा च श्रीविष्णुपुराणे—

परमात्मा त्वमेवैको नान्योऽस्ति जगतः परः ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥
यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं[2] पारमेश्वरम् ॥
अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वंद्वगदा भवन्ति ॥
ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥
ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ॥
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूमौ न तत्तथा तत्र कुतो हि तत्त्वम् ॥
मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मा[3]स्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥
तस्मिन्न विज्ञानमृतेऽस्ति किंचित्कचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदाविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं तथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥
अविद्यासंचितं कर्म तच्चाशेषेषु जन्तुषु ।
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ॥

१ ख. तदे° । २ क. °पं पर° । ३ क. °कर्मास्ति° ।

प्रवृद्ध्यपचयौ न स्त एकस्याखिलजन्तुषु ।
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ॥
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ।
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥
तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते ।
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ॥
तदा हि को भवान्सोऽहमित्येतद्विप्रलम्भनम् ।
त्वं राजा शिबिका चेयं वयं वाहाः पुरःसराः ॥
अयं च भवतो लोको न सदेतत्त्वयोच्यते ।
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ॥
तथाऽन्ये च नृपत्वं च तत्तत्संकल्पनामयम् ।
अनाशी[1] परमार्थश्च[2] प्राज्ञैरभ्युपगम्यते ॥
परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ॥
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ।
परो[3] ज्ञानमयः सद्भिर्नामजात्यादिभिः प्रभुः ॥
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति ।
तस्याऽऽत्मपरदेहेषु संयोगो ह्येक एव यत् ॥
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ।
एवमेकमिदं विद्धि नभेदि सकलं जगत् ॥
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
सर्वभूतान्यभेदेन स ददर्श तदाऽऽत्मनः ।
तथा ब्रह्म ततो मुक्तिमवाप परमां द्विज ॥
सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्माऽपि तथैकः सन्पृथक्पृथक् ॥
एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥

१ ख. अनाशि° । २ ख. परमार्थं च प्रा° । ३ क. परज्ञा° ।

तथा लैङ्गे—तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ।
परतन्त्रे स्वतन्त्रे च भिदाभावाद्विचारतः ॥
एकत्वमपि नास्त्येव द्वैतं तत्र कुतोऽस्त्यहो ।
एकं नास्त्यथ मर्त्यं[१] च कुतो मृतसमुद्भवः ॥
नान्तःप्रज्ञो बहिष्प्रज्ञो न चोभयत एव च ।
न प्रज्ञानघनस्त्वेवं न प्रज्ञोऽप्रज्ञ एव सः ॥
विदिते नास्ति वेद्यं च निर्वाणं परमार्थतः ।
अज्ञानतिमिरात्सर्वं नात्र कार्या विचारणा ॥
ज्ञानं च बन्धनं[२] चैव मोक्षो नाप्यात्मनो द्विजाः ।
न ह्येषा प्रकृतिर्जीवो विकृतिश्च विकारतः ।
विकारो नैव मायैषा सदसद्व्यक्तिवर्जिता ॥

तथाऽऽह भगवान्पराशरः—
अस्माद्धि जायते विश्वमत्रैव प्रविलीयते ।
स मायी मायया बद्धः करोति विविधास्तनूः ॥
न चात्रैवं संसरति न च संसारयेत्परम् ।
न कर्ता नैव भोक्ता च न च प्रकृतिपूरुषौ ॥
न माया नैव च प्राणश्चैतन्यं[३] परमार्थतः ।
तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ॥
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥
तस्मादद्वैतमेवाऽऽहुर्मुनयः परमार्थतः ।
ज्ञानस्वरूपमेवाऽऽहुर्जगदेतद्विचक्षणाः ॥
अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुदृष्टयः ।
कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ॥
दृश्यते ह्यर्थरूपेण पुरुषैर्भ्रान्तदृष्टिभिः ।
यदा पश्यति चाऽऽत्मानं केवलं परमार्थतः ॥
मायामात्रमिदं द्वैतं तदा भवति निर्वृतः ।
तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः ॥

एवं श्रुत्यादिना नामादिकारणोपन्यासमुखेन स्वरूपेण च बाधितत्वात्प्रपञ्चस्य मिथ्यात्वमवगम्यते । अस्थूलादिलक्षणस्य ब्रह्मणस्तद्विपरीतस्थूला-

१ क. मर्त्यश्च कु° । २ ख. °न्धश्च तथा मो° । ३ क. प्राणाश्चै° ।

कारो मिथ्या भवितुमर्हति । यथैकस्य चन्द्रमसस्तद्विपरीतद्वितीयाकारस्तद्वत् । तथा च सूत्रकारो न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति स्वरूपत उपाधितश्च विरुद्धरूपद्वयासंभवान्निर्विशेषमेव ब्रह्मेत्युपपाद्य न भेदादितिभेदश्रुतिबलात्किमिति सविशेषमपि ब्रह्म नाभ्युपगम्यत इत्याशङ्क्य न प्रत्येकमतद्वचनादित्युपाधिभेदस्य श्रुत्यैव बाधितत्वादभेदश्रुतिबलात्सविशेषस्य ग्रहणायोगान्निर्विशेषमेवेत्युपपाद्यापि चैवमेक इति भेदनिन्दापूर्वकमभेदमेवैके शाखिनः[1] समामनन्ति——मनसैवेदमाप्तव्यम् । नेह नानाऽस्ति किंचन । मृत्योः स मृत्युमाप्नोति । य इह नानेव पश्यति । एकधैवानुद्रष्टव्यमिति । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदिति सर्वभोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावताऽभिधीयत इति पुनरपि निर्विशेषपक्षे दृढीकृते किमित्येकस्वरूपस्योभयस्वरूपासंभवेऽनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमित्याशङ्क्यारूपवदेव हि तत्प्रधानत्वादिति रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यम् । कस्मात् । तत्प्रधानत्वात् । अस्थूलमनण्वह्रस्वमदीर्घमशब्दमस्पर्शमरूपमव्ययम् । आकाशो[2] वै[3] नाम । नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूरित्येतदनुशासनमित्येवमादीनि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि । इतराणि कारणब्रह्मविषयाणि न तत्प्रधानानि । तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति । अतस्तत्परश्रुतिप्रतिपन्नत्वान्निर्विशेषमेव ब्रह्मावगन्तव्यं न पुनः सविशेषमिति निर्विशेषपक्षमुपपाद्य का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिरित्याकाङ्क्षायां प्रकाशवच्चावैयर्थ्यादिति चन्द्रसूर्यादीनां जलाद्युपाधिकृतनानात्ववच्च ब्रह्मणोऽप्युपाधिकृतनानात्वरूपस्य विद्यमानत्वात्तदाकारवतो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । एवमवैयर्थ्यं नानाकारब्रह्मविषयाणां वाक्यानामिति भेदश्रुतीनामौपाधिकब्रह्मविषयत्वेनावैयर्थ्यमुक्त्वा पुनरपि निर्विशेषमेव ब्रह्मेति द्रढयितुमाह च तन्मात्रमिति । स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव । एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रधानघन एवेतिश्रुत्युपन्यासेन विज्ञानव्यतिरिक्तरूपान्तराभावमुपन्यस्य दर्शयति चाथो अपि स्मर्यत इति । अथात आदेशो नेति नेति । अन्यदेव तद्विदितादथो अविदितादधि । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् । विश्वस्वरूपवैरूप्यं लक्षणं परमात्मन इत्यादिश्रुतिस्मृत्युपन्यासमुखेन प्रत्यस्तमित-

१ क °वैतरेयशा° । २ ख. °शो ह वै । ३ क. ख. वै नामरू° ।

भेदमेव ब्रह्मेत्युपपाद्यात एव चोपमा सूर्यकादिवदिति । यत एव चैतन्यमात्ररूपो नेति नेत्यात्मको विदिताविदिताभ्यामन्यो वाचामगोचरः प्रत्यस्तमितभेदो विश्वस्वरूपविलक्षणस्वरूपः परमात्माऽविद्योपाधिको भेदः । अत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यादिरिवेत्युपमा दीयते मोक्षशास्त्रेषु ।

आकाशमेकं हि यथा घटादिषु पृथक्पृथक् ।
तथाऽऽत्मैको ह्यनेकश्च जलाधारेष्विवांशुमान् ॥
एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥

इति दृष्टान्तबलेनापि निर्विशेषमेव ब्रह्मेत्युपपाद्याम्बुवदग्रहणादित्यात्मनोऽमूर्तत्वेन सर्वगतत्वेन जलसूर्यादिवन्मूर्तसंभिन्नदेशस्थितत्वाभावाद्दृष्टान्तदार्ष्टान्तिकयोः सादृश्यं नास्तीत्याशङ्क्य वृद्धिह्रासभाक्त्वमिति न हि दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशमुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । वृद्धिह्रासभाक्त्वमत्र विवक्षितम् । जलगतसूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे च ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुविधायि भवति न तु परमार्थतः सूर्यस्य तत्त्वमस्ति । एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत एवोपाधिधर्मान्वृद्धिह्रासादीनिति विवक्षितांशप्रतिपादनेन दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यमुक्त्वा दर्शनाच्चेति पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् । इन्द्रो मायाभिः पुरुरूप ईयते । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । मायी सृजते विश्वमेतत् । एकस्तथा सर्वभूतान्तरात्मा । रूपं रूपं प्रतिरूपो बभूव । एको देवः सर्वभूतेषु गूढः । एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । स एष इह प्रविष्ट आनखाग्रेभ्यः । तत्सृष्ट्वा तदेवानुप्राविशदित्यादिना परस्यैव ब्रह्मण उपाधियोगं दर्शयित्वा निर्विशेषमेव ब्रह्म । भेदस्तु जलसूर्यादिवदौपाधिको मायानिबन्धन इत्युपसंहृतवान् । किंच ब्रह्मविदामनुभवोऽपि प्रपञ्चस्य बाधकः । तेषां निष्प्रपञ्चात्मदर्शनस्य विद्यमानत्वात्[1] । तथा[2] हि तेषामनुभवं दर्शयति । यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । विदिते

१ क. °द्यवा° । २ क. °था ते° ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ भद्रं कर्णेभिः० ॥ सह नाववत्विति शान्तिः ॥

हरिः ॐ ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म

वेद्यं नास्तीति । एवं निर्वाणमनुशासनम् । यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत् । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ।

यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति तद्रूपं परमेश्वरम् ॥
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ।
सर्वभूतान्यशेषेण ददर्श स तदाऽऽत्मनः ॥
तथा ब्रह्म ततो मुक्तिमवाप परमां द्विज ।
अत्राऽऽत्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
ब्रह्मभूतः स एवेह वेदशास्त्र उदाहृतः ॥

इत्येवं श्रुतिस्मृतियुक्तितोऽनुभवतश्च प्रपञ्चस्य बाधितत्वादत्यन्तविलक्षणानामसदृशरूपाणां मधुरतिक्तश्वेतपीतादीनामपि परस्पराध्यासदर्शनादमूर्तेऽप्याकाशे तलमलिनताद्यध्यासदर्शनादात्मानात्मनोरत्यन्तविलक्षणयोर्मूर्तामूर्तयोरपि तथा संभवात्स्थूलोऽहं कृशोऽहमिति देहात्मनोरध्यासानुभवात् ।

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥

इत्यादिश्रुतिस्मृतिदर्शनाद्य एनं वेत्ति हन्तारं प्रकृतेः क्रियमाणानीतिस्मृतिदर्शनाच्चाध्यासस्य प्रहाणायाऽऽत्मैकत्वविद्याप्रतिपत्तय उपनिषदारभ्यते ॥

ब्रह्मवादिनो वदन्तीत्यादि श्वेताश्वतराणां मन्त्रोपनिषत् । तस्या अल्पग्रन्था वृत्तिरारभ्यते—ब्रह्मवादिनो वदन्तीत्यादि । ब्रह्मवादिनो ब्रह्मवदनशीलाः सर्वे संभूय वदन्ति किं कारणं ब्रह्म किमिति स्वरूपविषयोऽयं प्रश्नः । अथवा कारणं ब्रह्माऽऽहोस्वित्कालादि कालः स्वभाव इति वक्ष्यमाणम् । अथवा किं कारणं ब्रह्म सिद्धिरूपं उपादानभूतं किमित्यर्थः । अथवा बृंहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुत्यैव निर्वचनान्निमित्तोपादानयोरुभयोर्वा प्रश्नः । किं

१ क. °नो ब्रह्म व° । २ क. °पमुपा° ।

कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः[1]।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यव-
स्थाम् ॥ १ ॥ कालः स्वभावो नियतिर्यदृच्छा
भूतानि योनिः पुरुष इति चिन्त्या[2]। संयोग एषां न

कारणं ब्रह्मेति। किं कारणं ब्रह्मा[3]ऽऽहोस्वित्कालादि। अथवाऽकारणमेव। कारणत्वेऽपि किं निमित्तमुतोपादानम्। अथवोभयम्। तद्वा किंलक्षणमिति वक्ष्यमाणपरिहारानुरूपेण तन्त्रेणाऽऽवृत्त्या वा प्रश्नेऽपि संग्रहः कर्तव्यः। प्रश्नापेक्षत्वात्परिहारस्य। कुतः स्म जाताः कुतो वयं कार्यकारणवन्तो[4] जाताः। स्वरूपेण जीवानामुत्पत्त्याद्यसंभवात्। तथा च श्रुतिः—न जायते म्रियते वा विपश्चिज्जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति। जरामृत्यु शरीरस्य। अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेति। तथा च स्मृतिः—अजः शरीरग्रहणात्स जात इति कीर्त्यत इति। किंच। जीवाम केन केन वा वयं सृष्टाः सन्तो जीवामेति स्थितिविषयः प्रश्नः। क्व च संप्रतिष्ठाः प्रलयकाले स्थिताः। अधिष्ठिता नियमिताः केन सुखेतरेषु सुखदुःखेषु वर्तामहे ब्रह्मविदो व्यवस्थां हे ब्रह्मविदः सुखदुःखेषु व्यवस्थां केनाधिष्ठिताः सन्तोऽनुवर्तामह इति सृष्टिस्थितिप्रलयनियमहेतुः किमिति प्रश्नसंग्रहः ॥ १ ॥

इदानीं कालादीनि ब्रह्मकारण[5]वादप्रतिपक्षभूतानि विचारविषयत्वेन दर्शयति—कालः स्वभाव इति। योनिशब्दः संबध्यते। कालो योनिः कारणं स्यात्। कालो नाम सर्वभूतानां विपरिणामहेतुः स्वभावः। स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः। अग्नेरौष्ण्यमिव। नियतिरविषमपुण्यपापलक्षणं कर्म तद्वा कारणम्। यदृच्छाऽऽकस्मिकी प्राप्तिः। भूतान्याकाशादीनि वा योनिः पुरुषो वा विज्ञानात्मा योनिरितीत्थमुक्तप्रकारेण किं योनिरिति चिन्त्या चिन्त्यं निरूपणीयम्। केचिद्योनिशब्दं प्रकृतिं वर्णयन्ति। तस्मिन्पक्षे किं कारणं ब्रह्मेति पूर्वोक्तं कारणपदमत्राप्यनुसंधेयम्। तत्र कालादीनामकारणत्वं दर्शयति—संयोग एषामित्यादिना। अयमर्थः—किं कालादीनि प्रत्येकं कारणमुत तेषां समूहः। न च प्रत्येकं कालादीनां कारणत्वं संभवति। दृष्ट[6]विरुद्धत्वात्। देशकालनिमित्तानां संहतानामेव लोके कार्यकरत्वदर्शनात्। न चाप्येषां कालादीनां संयोगः समूहः कारणम्। समूहस्य संहतेः परार्थत्वेन

१ ग. घ. °तिष्ठा। अ°। २ ग. घ. ङ. चिन्त्यम्। ३ क. किं ब्रह्म कारणमाहो°। ४ ख. °र्यकर°। ५ क. °णत्वे प्र°। ६ क. दृष्टिवि°।

त्वात्मभावादात्माऽप्यनीशः सुखदुःखहेतोः ॥ २ ॥
ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं

---

शेषत्वेन शेषिण आत्मनो विद्यमानत्वादस्वातन्त्र्यात्सृष्टिस्थितिप्रलयनियमलक्षणकार्यकरणत्वायोगात् । आत्मा तर्हि कारणं स्यादेवात आह—आत्माऽप्यनीशः सुखदुःखहेतोरिति । आत्मा जीवोऽप्यनीशोऽस्वतन्त्रो न कारणम् । अस्वातन्त्र्यादेव चाऽऽत्मनोऽपि सृष्ट्यादिहेतुत्वं न संभवतीत्यर्थः । कथमनीशत्वम् । सुखदुःखहेतोः सुखदुःखहेतुभूतस्य पुंण्यापुण्यलक्षणस्य कर्मणो विद्यमानत्वात्कर्मपरवशत्वेनास्वातन्त्र्याच्च । त्रैलोक्यसृष्टिस्थितिनियमे सामर्थ्यं न विद्यत एवेत्यर्थः । अथवा सुखदुःखादिहेतुभूतस्याऽऽध्यात्मिकादिभेदभिन्नस्य जगतोऽनीशो न कारणम् ॥ २ ॥

एवं पक्षान्तराणि निराकृत्य प्रमाणान्तरागोचरे वंस्तुनि प्रकारान्तरमपश्यन्तो ध्यानयोगानुगमेन परममूलकारणं स्वयमेव प्रतिपेदिर इत्याह—ते ध्यानयोगेति । ध्यानं नाम चित्तैकाग्र्यं तदेव योगो युज्यतेऽनेनेति ध्यातव्यस्वीकारोपायस्तमनुगताः समाहिता अपश्यन्दृष्टवन्तो देवात्मशक्तिमिति । पूर्वोक्तमेव प्रश्नसमुदायपरिहाराणां सूत्रमुत्तरत्र प्रत्येकं प्रपञ्चयिष्यते । तत्रायं प्रश्नसंग्रहः—किं ब्रह्म कारणमाहोस्वित्कालादि । तथा किं कारणं ब्रह्माऽऽहोस्वित्कार्यकारणविलक्षणम् । अथवा कारणं वाऽकारणं वा । कारणत्वेऽपि किमुपादानमुत निमित्तम् । अथवोभयकारणं ब्रह्म किंलक्षणमकारणं वा ब्रह्म किंलक्षणमिति । तत्रायं परिहारः—न कारणं नाप्यकारणं न चोभयं नाप्यनुभयं न च निमित्तं न चोपादानं न चोभयम् । एतदुक्तं भवति—अद्वितीयस्य परमात्मनो न स्वतः कारणत्वमुपादानत्वं निमित्तत्वं च । यदुपाधिकमस्य कारणत्वादि तदेव कारणं निमित्तमुपपाद्य तदेव प्रयोजकं निष्कृष्य दर्शयति—देवात्मशक्तिमिति । देवस्य द्योतनादियुक्तस्य मायिनो महेश्वरस्य परमात्मन आत्मभूतामस्वतन्त्रां न सांख्यपरिकल्पितप्रधानादिवत्पृथग्भूतां स्वतन्त्रां शक्तिं कारणमपश्यन् । दर्शयिष्यति च—मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति । तथा ब्राह्मे—

एषा चतुर्विंशतिभेदभिन्ना माया परा प्रकृतिस्तत्समुत्था । तथा च—मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमिति । स्वगुणैः प्रकृतिकार्यभूतैः पृथिव्यादि-

---

१ ख. °पुण्यपापल° । २ ख. ब्रह्माणि । ३ ख. निरूप्य ।

स्वगुणैर्निगूढाम् । यः कारणानि
निखिलानि तानि कालात्मयुक्ता-
न्यधितिष्ठत्येकः ॥ ३ ॥

भिश्च निगूढां संवृतां कार्याकारेण कारणाकारस्याभिभूतत्वात्कार्यात्पृथक्स्वरूपेणोपलब्धुमयोग्यामित्यर्थः । तथा च प्रकृतिकार्यत्वं गुणानां दर्शयति व्यासः—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इति । कोऽसौ देवो यस्येयं विश्वजननी शक्तिरभ्युपगम्यत इत्यत्राऽऽह—यः कारणानीति । यः कारणानि निखिलानि तानि पूर्वोक्तानि कालात्मयुक्तानि कालात्मभ्यां युक्तानि कालपुरुषसंयुक्तानि स्वभावादीनि कालः स्वभाव इतिमन्त्रोक्तान्यधितिष्ठति नियमयत्येकोऽद्वितीयः परमात्मा तस्य शक्तिं कारणमपश्यन्निति वाक्यार्थः । अथवा देवात्मशक्तिं[1] देवात्मनेश्वररूपेणावस्थितां शक्तिम् । तथा च—

'सर्वभूतेषु सर्वात्मन्या शक्तिरपरा तव ।
गुणाश्रया नमस्तस्यै शाश्वतायै परेश्वर ॥
याऽतीताऽगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानध्यानपरिच्छेद्या[2] तां वन्दे देवतां पराम्' ॥ इति ।

प्रपञ्चयिष्यति स्वभावादीनामकारणत्वमज्ञानस्यैव कारणत्वं स्वभावमेके कवयो वदन्तीत्यादि । मायी सृजते विश्वमेतत् । एको रुद्रो न द्वितीयाय तस्थे । एको वर्णो बहुधा शक्तियोगादित्यादि । स्वगुणैरीश्वरगुणैः सर्वज्ञत्वादिभिर्वा सत्त्वादिभिर्निगूढां कार्यकारणविनिर्मुक्तपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानाम् । कोऽसौ देवः । यः कारणानीत्यादि पूर्ववत् । अथवा देवस्य परमेश्वरस्याऽऽत्मभूतां जगदुदयस्थितिलयहेतुभूतां ब्रह्मविष्णुशिवात्मिकां शक्तिमिति । तथा चोक्तम्—

'शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिकाः' ॥ इति ।
'ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तयः' ॥ इति च ।

स्वगुणैः सत्त्वरजस्तमोभिः सत्त्वेन विष्णू रजसा ब्रह्मा तमसा महेश्वरः सत्त्वाद्युपाधिसंबन्धात्स्वरूपेण निरुपाधिकपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानाः परस्यैव ब्रह्मणः सृष्ट्यादिकार्यं कुर्वन्तोऽवस्थाभेदमाश्रित्य शक्तिभेदव्यवहारो न पुनस्तत्त्वभेदमाश्रित्य । तथा चोक्तम्—

---

१ क. देवतात्म° । २ ख. °च्छेद्यां तां ।

ज्ञात्वाऽमृता भवन्तीत्युक्तम्। तस्य ज्ञानं न कस्यापीत्याशङ्क्य मन्त्रद्रष्टा स्वानुभवमाह—वेद। जानामि। अहम्। मन्त्रद्रष्टा। एवम्। ब्रह्मरूपम्। पुरुषम्। परिपूर्णम्। महान्तम्। सर्वस्मादधिकम्। आदित्यवर्णम्। आदित्यस्य वर्ण इव वर्णो यस्य स आदित्यवर्णस्तमादित्यवद्भास्वरं स्वयंप्रकाशमित्यर्थः। तमसः परस्तात्। अविद्यायाः परतः। ननु किमर्थमात्मज्ञानेऽतियत्नः करणीयः सन्ति सहस्रमुपायाः सुखप्राप्त्यै दुःखपरिहारायेत्यत आह—तमेव। आत्मानमेव नत्वन्यम्। विदित्वा। साक्षात्कृत्य। अति मृत्युमेति। मृत्युमावरणशक्तिं विक्षेपजननीमविद्यां दुःखवृक्षबीजभूतां मरणादिप्रबन्धदायिनीमत्येति अतीत्य गच्छति। ननु ज्ञातव्येषु ब्रह्मैव ज्ञेयमस्तु न तावतोपायान्तरनिषेध इत्यत आह—नान्यः पन्थाः। ब्रह्मज्ञानादन्यो मार्गो निरतिशयसुखप्राप्तिनिःशेषानर्थनिवृत्त्युपायभूतः। विद्यते। नास्ति। अयनाय। संसाराब्धेः पारगमनायाविद्यानिवृत्तय इत्यर्थः॥ ८॥

आत्मानमेव ज्ञात्वाऽति मृत्युमेतीत्युक्तं स आत्मा किंरूप इति श्रोतृबुभुत्सानिवृत्त्यर्थमाह—यस्मात्। आत्मनः। परं नापरमस्ति किंचित्। उत्कृष्टमपकृष्टं वा किंचिन्नास्ति द्वितीयाभावादित्यर्थः। यस्मात्। आत्मनः। नाणीयो न ज्यायोऽस्ति कश्चित्। अण्वल्पम्। अतिशयेनाण्वणीयः। ज्यायोऽतिशयेन वृद्धम्। कश्चित्किंचिदपि। यस्मान्नाणीयो न ज्यायो विद्यते। अयमात्माऽणोरणीयान्महतो महीयान्सर्वात्मत्वादित्यर्थः। वृक्ष इव। शाखीव स्वगतभेदशून्यः। स्तब्धः। स्वतो निश्चलः। दिवि। द्योतनात्मके स्वयंप्रकाशे स्वरूपे। तिष्ठति। वर्तते। एकः। सर्वभेदशून्यः। वृक्षनिदर्शनेन परिच्छेदं प्राप्तं वारयति—तेन। एकेनाऽऽत्मना पुरुषेण। इदम्। विविधप्रत्ययगम्यं विश्वम्। पूर्णं पूरितमित्यर्थः। पुरुषेण। पुरि शरीरे शयानेन परिपूर्णेन वा। सर्वम्। निखिलम्॥ ९॥

कार्यकारणयोरभेदे हिरण्यगर्भस्यापि कस्मात्तत्त्वं न स्यादित्यत आह—ततः। तस्माद्धिरण्यगर्भात्। यत्। प्रसिद्धं परिपूर्णत्वेन। उत्तरतरम्। अतिशयेनोत्तरं पूर्वमित्यर्थः। तत्। उक्तम्। अरूपम्। रूपादिशून्यम्। तर्हि कारणावस्थेत्याशङ्क्य नेत्याह—अनामयम्। आमयो रोगो दुःखहेतुरविद्या तद्रहितमनामयम्। ये। अधिकारिणः। एतत्। अनामयं परिपूर्णं रूपम्। विदुः। जानन्ति। अमृतास्ते भवन्ति। त उक्ताः। व्याख्यातमन्यत्। ननु किमात्मज्ञानेन जानतामजानतां च व्यवहारस्य समत्वदर्शनादित्यत आह—अथ। पूर्वेभ्योऽर्थान्तरभूता अविद्वांसः। इतरे। अन्ये। दुःखमेवापियन्ति। व्यवहारस्य

समत्वेऽप्यविद्वांसोऽहंममाभिमानेन दुःखमेवापिगच्छन्ति न पुनरितरे तदभिमानशून्यत्वादित्यर्थः ॥ १० ॥

यदुत्तरतरं तदरूपमित्युक्तं तेन कार्यकारणयोर्भेदबुद्धिः प्राप्ता तन्निवारणार्थमाह––सर्वाननशिरोग्रीवः । सर्वेषां सर्वाणि वाऽऽननानि शिरांसि ग्रीवाश्च यस्य स सर्वाननशिरोग्रीवः । शरीरात्मत्वनिवारणार्थमाह––सर्वभूतगुहाशयः । सर्वेषा भूतानां स्थावरजङ्गमानां गुहा बुद्धिस्तत्र शयनं करोतीति गुहाशयः । पुनः सर्वभूतगुहाशयत्वेन परिच्छेदे प्राप्त उत्तरमाह––सर्वव्यापी च । सर्वमिदं चेतनाचेतनात्मकं व्याप्नोति सर्वव्यापी । चकारो व्याप्यव्यापकभेदनिवारणार्थः । भगवान् । समग्रज्ञानवैराग्यैश्वर्यधर्मयशःश्रियो भगशब्दवाच्यास्तद्वान्भगवान् । यस्मात्सर्वव्यापी भगवांश्च । तस्मात् । ततः । सर्वगतः । सर्वव्यापित्वेन सर्वत्र प्राप्तः । शिवः । षड्गुणैश्वर्यवत्त्वेन स्वयंप्रकाशानन्दात्मरूपत्वेन च मङ्गलः ॥ ११ ॥

मङ्गलेषु निरवधिकत्वमाह––महान् । अत्यन्तमधिकः । न ततोऽधिकं मङ्गलमित्यर्थः । यथा न्यूनमङ्गलमसमर्थमरूपं तथाऽधिकमङ्गलोऽप्ययं मङ्गलत्वादित्यत आह-प्रभुर्वै । समर्थः प्रसिद्धः । तत्र हेतुः–पुरुषः । परिपूर्णः । नातोऽन्यः समर्थ इत्यर्थः । प्रभुत्वमाह–सत्त्वस्य । अन्तःकरणस्य ज्ञानक्रियाशक्तेर्हिरण्यगर्भस्येत्यर्थः । एषः । स्वयंप्रकाशचिदानन्दात्मरूपः । प्रवर्तकः । प्रवृत्तेः कारयितोत्पादक इत्यर्थः । ननु कस्य सत्त्वस्योत्पादक इत्यत आह—सुनिर्मलाम् । सुष्ठ्वविद्यादिमलरहितां मोक्षरूपाम् । इमाम् । विदुषां प्रत्यक्षाम् । शान्तिम् । स्वयंप्रकाशानन्दात्माविर्भावरूपां यतः प्राप्नोति तस्येति शेषः । ईशानः । सर्वस्य नियन्ता । नात्र पुनरुक्तं प्रभुत्वमीश्वरस्यापि दृष्टं तत्प्रसङ्गेनोच्यमानत्वात् । ज्योतिः । स्वयंप्रकाशज्योतिःस्वरूपः । ज्योतिष्ट्वे व्ययाशङ्केतरज्योतिर्वदत आह––अव्ययः । व्ययरहितः ॥ १२ ॥

सर्वभूतगुहाशयत्वमुपपादयति–अङ्गुष्ठमात्रः । सर्वेषां द्विपदां स्वाङ्गुष्ठपरिमाणं हृदयं बुद्धेरणुत्वेऽपि हृदयव्यापिप्रकाशत्वात्साऽपि हृदयस्था हृदयपरिमाणा ततो बुद्ध्यन्तःस्थः पुमानप्यङ्गुष्ठपरिमाणः । पुरुषः । पुरिशयः । अन्तरात्मा । आत्मनो बुद्धेरन्तोऽन्तरात्मा । अङ्गुष्ठमात्रत्व उपपत्तिमाह––सदा । सर्वदा । जनानाम् । जनिमताम् । हृदये । हृदयसरसिजे । संनिविष्टः । सम्यङ्ङ्नितरां प्रविष्टः । ननु सर्वस्मिञ्शरीरे प्रविष्टः कथं हृदये संनिविष्ट इत्यत आह—हृदा । हृदयेनाभिक्लृप्त इत्यन्वयः । ननु पद्माकारो मांसखण्डो हृत्तेन कथमभिक्लृप्त इत्यत आह––मनीषा । मनस ईष्टे या सा मनीट् तया । तर्हि चिच्छक्तिरित्यत आह—मनसा । अन्तःकरणेन हृदयस्थेन संकल्पविकल्पनि·

यद्वा निश्चयात्मकेनान्तःकरणव्यापारेणेत्यर्थः। अभिक्लृप्तः। समन्तात्क्लृप्तः सर्वशरीरे वर्तमानोऽपि कुतश्चिन्निमित्तादङ्गुष्ठमात्रत्वेन मनसा परिक्लृप्त इत्यर्थः। य एतद्विदुरमृतास्ते भवन्ति। एतदुपाधेः पृथक्कृतं स्वयंप्रकाशचिदानन्दात्मरूपमङ्गुष्ठमात्रस्वरूपं मुञ्जादिवेषीकाम्। व्याख्यातमन्यत् ॥ १३ ॥

अङ्गुष्ठमात्रत्वाभिधानेनाल्पत्वं प्राप्तं तत्सर्वात्मकत्वकथनेन वारयति— सहस्रशीर्षा। सहस्रशीर्षोऽनन्तमस्तक इत्यर्थः। पुरुषः। परिपूर्णः। सहस्राक्षः। अनन्तचक्षुः। सहस्रपात्। अनन्तचरणः। सः। सहस्रशीर्षः। भूमिं विश्वतो वृत्वा। ब्रह्माण्डकटाहमेदिनीं सर्वत आवृत्य। अत्यतिष्ठद्दशाङ्गुलम्। दशसंख्याकाङ्गुष्ठपरिमितं देशमतीत्य स्थितिमकरोत्तत्रोपलभ्यत इत्यर्थः। इदं चाध्यात्माधिदैवं च समत्वेनावगन्तव्यम्। अथवा—अत्यतिष्ठत्। भूमिं विश्वतो वृत्वा स्थितस्तत्रोपपत्तिर्यस्मात्सर्वमतीत्य स्थितिमकरोदयं तत्राप्युपपत्तिः षण्णवत्यङ्गुले शरीर ईश्वरस्येदं सचराचरं दशाङ्गुलमल्प एकदेशस्तदीय एकांश इत्यर्थः ॥ १४ ॥

ननु यद्ययमिदमतीत्य स्थितो नदीमिव कूलं तथा चायमस्मात्तद्वदेव भिन्नः स्यादित्यत आह—पुरुष एवेदं सर्वम्। भूमिमतीत्य स्थितः परिपूर्ण एव नत्वन्यः। इदं विविधप्रत्ययगम्यं निखिलमपि न ततो भिन्नमित्यर्थः। तथाऽपि वर्तमानं सर्वं पुमान्न भूतं न च भावीत्यत आह–यद्भूतम्। प्रसिद्धमतीतं यत्तत्पुरुष एव। यच्च भव्यम्। यदपि भवनस्य कर्तृ तदपि पुरुष एवेति पूर्वेणान्वयः। अथवा सर्वशब्दार्थमाह—यद्भूतं यच्च भव्यम्। अस्मिन्पक्षे चकारो वर्तमानसमुच्चयार्थः। एवं चेन्नायमीशः संसाररूपत्वादित्यत आह—उत। अपि। अमृतत्वस्य। मोक्षस्य। ईशानः। ईश्वरः। उतशब्दादस्य सर्वस्यापि। ननु कथं वाङ्मात्रेणेश्वरोऽस्येत्यत आह—यत्। यस्मात्। अन्नेन। अदनीयेन। अतिरोहति। आधिकां वृद्धिं गच्छति। एतदुक्तं भवति—न वाङ्मात्रेणेश्वरः किं त्वनेनैतदित्थमेवेत्यादिनियमकारित्वादिति ॥ १५ ॥

ननु भगवानयमन्नेन यद्यतिरोहति तर्हि शरीरवन्नियतपाणिपादादिरूप इत्यत आह—सर्वतःपाणिपादम्। सर्वतः पाणयः पादाश्च यस्य तत्सर्वतःपाणिपादम्। तत्। ईश्वररूपम्। सर्वतोक्षिशिरोमुखम्। सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखम्। सर्वतःश्रुतिमत्। सर्वतः श्रुतयो यस्य सन्ति तत्सर्वतःश्रुतिमत्। लोके। संसारे कर्मफलेऽस्मिन्नज्ञाद्यविद्यावशात्। सर्वम्। निखिलम्। आवृत्य स्वेन ब्राह्मेण रूपेणाऽऽवरणं कृत्वा। तिष्ठति। स्पष्टम्। सर्वात्मत्वादन्नेनातिरोहो न देहवदित्यर्थः ॥ १६ ॥

इन्द्रियात्मत्वमुक्त्वेन्द्रियज्ञानतद्विषयरूपतामाह—सर्वेन्द्रियगुणाभासम् । सर्वेन्द्रियाणां गुणास्तद्वृत्तयो रूपादिज्ञानानीत्यर्थः । तेषामाभासाः फलानि घटादिस्फुरणानि तदाश्रया घटादयो लक्ष्यन्त औचित्यात् । सर्वेन्द्रियाणां गुणाश्चाऽऽभासाश्च यस्मिंस्तादात्म्येन व्यवस्थितास्तत्सर्वेन्द्रियगुणाभासम् । किमेवंरूपमेवेत्याशङ्क्य नेत्याह—सर्वेन्द्रियविवर्जितम् । सर्वैरिन्द्रियैः । उपलक्षणमिदम् । अन्यैरप्यविद्यादिभिर्भावैर्विवर्जितं परित्यक्तं तद्रहितमित्यर्थः । तत्पूर्वोक्तादन्यदितिबुद्धिं वारयति— सर्वस्य प्रभुमीशानम् । सचराचरस्य जगतः सामर्थ्ये सति नियन्तारम् । एवं चेन्नाऽऽर्तानां रक्षकः परमेश्वरो नियन्तृत्वादित्यत आह—सर्वस्य । स्थावरजङ्गमात्मकस्य । शरणम् । रक्षितृैश्वरं रूपम् । अनेन सघृण ईश्वर इत्युक्तम् । इदानीं वैषम्यं वारयति—सुहृत् । उपकारनिरपेक्षः प्रत्युपकारस्य कर्ताऽविषम इत्यर्थः ॥ १७ ॥

तत्पदार्थमुक्त्वा त्वंपदार्थमाह—नवद्वारे । नवसंख्याकानि द्वाराणि निर्गमनकारणानि द्वौ कर्णौ द्वे चक्षुषी द्वे नासिके आस्यमुपस्थः पायुश्चेति नव च्छिद्राणि यस्य तस्मिन् । पुरे । धातुभिः पूर्यत इति पुरं तस्मिन् । देही । देहसंबन्धवान् । हंसः । बुद्ध्युपाधिः सन्हन्ति गच्छतीति हंसः । लेलायते । चलति । क । बहिः । रूपादौ बहिर्मुखत्वेन । इदानीं वाक्यार्थमाह— वशी । यो हंसः स एव वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च चकाराज्जडस्यापि । स्पष्टमन्यत् । सर्वस्य वशे वर्तत इत्यर्थः ॥ १८ ॥

येनायं हंस ऐक्यं गच्छति यश्च हंसः स एव वस्तुत एतादृशरूप इत्याह— अपाणिपादः । अकरचरणः । जवनः । वेगवान् । अपाणिर्ग्रहीता । आदाता । पश्यति । अवलोकयति । अचक्षुः । अनेत्रः । सः । जीवाभिन्न ईश्वरः स्वयंप्रकाशचिदानन्दात्मवपुः । शृणोति । श्रवणं करोति । अकर्णः । कर्णरहितः । सः । उक्तः पुनस्तच्छब्दादानमपाणिपादादावपि तच्छब्दानुवृत्त्यर्थम् । वेत्ति । जानाति । वेद्यम् । वेदनीयं निखिलमपि वस्तुजातम् । न च । नैवम् । तस्य । आत्मनः । अस्ति । विद्यते । वेत्ता । वेदिता ज्ञाता । तम् । अपाणिपादादिरूपम् । आहुः । कथयन्ति ब्रह्मज्ञानिन इति शेषः । अग्र्यम् । अग्रे भवम् । पुरुषम् । परिपूर्णम् । महान्तम् । सर्वस्मादधिकम् ॥ १९ ॥

इदानीमात्मसाक्षात्कारेऽगण्यपुण्योदयादीश्वरकटाक्षः कारणमित्याह— अणोरणीयान् । अल्पादल्पतरः । महतो महीयान् । प्रौढात्प्रौढतरः । आत्मा । अस्मत्प्रत्ययसाक्षी । अस्य । जन्तोः । प्रत्यक्षस्य जननधर्मवतः । निहितः । निक्षिप्तः । गुहायाम् । बुद्धौ । तम् । अणोरणीयानित्यादिधर्मैर्दुर्दर्शम् । अक्रतुम् ।

संकल्परहितम्। पश्यति। साक्षात्करोति। वीतशोकः। अपगताविद्यः। तत्र कारणमाह—धातुर्जगतो विधातुरीश्वरस्य प्रसादात्। करुणाकटाक्षात्। अथवा धातुरीश्वरस्यान्तःकरणस्य प्रसादान्नैर्मल्यात्। महिमानम्। अधिकगुणरूपम्। ईशम्। नियन्तारम्॥ २०॥

धातुः प्रसादे सत्यात्मा ज्ञायत इति मन्त्रद्रष्टा स्वानुभवं दर्शयन्नाह—वेदाहमेतम्। व्याख्यातम्। अजरम्। जरारहितम्। अत्र हेतुः—पुराणम्। पुराऽपि नवं सर्वदैकरूपमित्यर्थः। पुराणत्वे हेतुः—सर्वात्मानम्। सर्वेषामस्मत्प्रत्ययसाक्षिणम्। सर्वात्मत्वे हेतुः—सर्वगतम्। सर्वत्र प्राप्तम्। सर्वगतत्वे हेतुः—विभुत्वात्। व्यापित्वात्। इदानीं पूर्वोत्तरपक्षावाह—जन्मनिरोधम्। जन्म च निरोधश्च जन्मनिरोधमुत्पत्तिविनाशावित्यर्थः। प्रवदन्ति। प्रकर्षेण कथयन्ति। मूढा इति शेषः। यस्य। आत्मनः। अयं पूर्वः पक्षः। ब्रह्मवादिनः। उत्पन्नतत्त्वसाक्षात्काराः। हि। प्रसिद्धः। प्रवदन्ति। प्रकर्षेण कथयन्ति। नित्यम्। धर्मधर्मिभेदनिवारणार्थं च त्वान्तत्वेनानभिधानं जन्ममरणशून्यमविनाश्यात्मतत्त्वम्॥ २१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीमच्छंकरानन्दभगवतः कृतौ श्वेताश्वतरोपनिषद्दीपिकायां
तृतीयोऽध्यायः॥ ३॥

धातुः प्रसादादक्रतुं पश्यतीत्युक्तम्। धातुः प्रसादोपायश्च नोक्तः। इदानीमस्मिन्नध्याये धातुरीश्वरस्य विविधविभूतिमद्रूपेण वर्तमानस्य प्रार्थनादिरूप उपायो धातुः प्रसादे प्रसङ्गाच्च तत्त्वंपदार्थयोरपि प्रकारान्तरेण निर्णय ईश्वरस्य मायाबलाज्जगत्कारणत्वादिबद्धाबद्धस्वरूपं चेत्यादि कथ्यते—यः प्रसिद्धः। एकः। भेदशून्यः। वर्णः। वर्ण्यत इति वर्णः पदार्थः स्वयंप्रकाशचिदानन्दात्मेत्यर्थः। बहुधा। बहुप्रकारान्। शक्तियोगात्। मायासंबन्धात्। वर्णान्। पदार्थांश्चिदचिदात्मकान्। अनेकान्। भेदवतः। निहितार्थः। निहितो निक्षिप्तस्तिरस्कृत इत्यर्थः। अर्थः प्रयोजनं यस्य स निहितार्थः। दधाति। धारयति करोतीत्यर्थः। वि चैति। व्येति च विविधं प्राप्नोत्यपि। शान्ते। स्वप्रकाशचिदानन्दात्मनि। किम्। विश्वम्। चराचरात्मकम्। आदौ। जगत उत्पत्तेः प्राक्। सः। एको वर्ण इत्यादिनोक्तः। देवः। स्वयंप्रकाशः। अथवा य एको वर्ण ओंकारो बहुधा बहुशाखोपाङ्गोपवेदादिभिन्नाञ्शक्तियोगाद्वर्णानेकान्वेदानृगादिभेदभिन्नान्। स्वव्याप्तिशक्तिसंबन्धाच्छङ्कुरिव पर्णान्यनेकानि निहितार्थः स्वात्मनि प्रक्षिप्ताभिधेयो ददाति विचयति शान्ते विश्वमादौ स देवः स ओंकार आदित्यवत्सर्वार्थप्रकाशको देव आदावभिधेयस्योत्पत्तेः प्राक् शान्तेऽभिधानाभिधेयशून्ये स्वात्मनि विविधमभिधेयत्वेनाभिधानरूपः स्वयं

प्राप्नोत्यपि विश्वम् । अथवा य एको वर्णोऽकारो बहुधा बहुप्रकारान्ह्रस्वादिभेदेन स्वात्मसामर्थ्यसंबन्धादुकारादीन्वर्णान्विभिन्नान्स्वात्मनि प्रक्षिप्तोंकारवर्णनिष्पत्तिप्रयोजनो दधाति विविधं प्राप्नोत्यपि स स्वार्थप्रकाशक ॐकारस्य सप्तममात्रास्वरूपे स्वात्मन्यशेषव्यापारोपरमे विश्वं प्रथमतः। अस्मिन्पक्ष आदौ य एक इत्यन्वयः। अथवा य एको वर्णः शब्दतत्त्वं बहुधा बहुप्रकारान्कुण्डलिनीशक्तिसंबन्धादेकद्वित्र्यादिवेष्टनैः सस्वरान्कादीन्वर्णान्विभिन्नान्स्वात्मनि निहिताभिधेयप्रयोजनो दधाति करोति शान्ते चिदचिदादिभेदशून्ये स्वात्मन्यादौ सर्ववर्णोत्पत्तेः प्राग्विश्वं विविधं प्राप्नोत्यपि स प्रकाशस्वभावोऽर्थानां वर्णेष्वन्तर्भूतत्वात्तेषां च शब्दतत्त्वे ततो विश्वस्य स्वात्मनि प्राप्तिरविरुद्धा । अथवाऽष्टाङ्गयोगनिरतस्य योगिन आदौ प्रथमायां योगसिद्धौ निर्विकल्पकप्रतीतिविषयवद्य एको वर्णो नीहारादिरूपभेदशून्यो रूपतन्मात्रं हार्दलोहितपिण्डस्थं बहुप्रकारान्मनःपवनविधारणायासशक्तिसंबन्धान्नीहारादिवर्णाञ्श्वेतादीन्बहुभेदभिन्नान्स्वात्मनि निक्षिप्तयोगसिद्धिप्रयोजनो धारयति । उपरते तस्मिन्योगसिद्धिविघ्ने विश्वं भेदात्मकं चावगच्छत्यपि स वर्णो यन्निमित्तं विघ्ननिर्गमनं च देवो द्योतनात्मकः स्वयंप्रकाशानन्दात्मप्रकाशसमासन्नत्वात् । सः । यो वर्णः स देव इत्युक्तः प्रसिद्धः । नः । अस्मान् । बुद्ध्या शुभया । ब्रह्मविषयया धिषणया मोक्षहेतुभूतया । संयुनक्तु । संयोजयत्विति वाचा व्यापारः प्रदर्शितः प्रयोजनकथनेन ॥ १ ॥

इदानीं विभूतिमत्सत्त्वं ब्रह्मेत्यवगन्तव्यमिति कथयन्मानसं[1] चिन्तनमग्न्यादयो ब्रह्मैवेति कर्तव्यमिति तावदाह—तदेव । पूर्वोक्तं ब्रह्मैव । अग्निः । तेजः । तत् । ब्रह्म । आदित्यः । चण्डकिरणः । तत् । ब्रह्म । वायुः । पवनः । तदु चन्द्रमाः । सोमोऽपि ब्रह्म । तदेव शुक्रम् । ब्रह्मैव दीप्तिमत्स्वप्रकाशस्वरूपम् । तद्ब्रह्म । जगत्कारणम् । तदापः । ब्रह्मैवोदकानि । तत्प्रजापतिः । ब्रह्म विधाता ॥२॥

एवं स्तुत्या चिन्तनेन च स्वात्मनि प्रतिभातब्रह्मस्वरूपं मन्त्रद्रष्टाऽऽह—त्वम्। स्वयमानन्दात्मा । स्त्री । स्त्रीशब्दप्रत्ययविषयः । त्वम् । आनन्दात्मा । पुमान्। पुरुषशब्दप्रत्ययविषयः । असि । भवसि । त्वम् । आनन्दात्मा । कुमारः । कुमारशब्दप्रत्ययविषयः । उत वा । अप्येव । कुमारी । कुमारीशब्दप्रत्ययविषयः । त्वमिति शेषः । त्वम् । आनन्दात्मा । जीर्णः । वयोहीनः । दण्डेन। दण्डतृतीयपादेन । वञ्चसि । अञ्चसि । गच्छसि। त्वम् । आनन्दात्मा । जातः। उत्पन्नः । भवसि । सत्तां करोषि । विश्वतोमुखः । सर्वतोमुखो नानावस्थां प्राप्नोषीत्यर्थः ॥ ३ ॥

---

१ क. ख. °सं ते° ।

यद्यपि स्त्री पुमानित्युक्ते कुमारादिकमपि सिद्धं भवति तथाऽपि युवतिरेतः-सिचोरेव स्त्रीपुंसत्वं स्त्रीलिङ्गपुंलिङ्गयोरितिशङ्कानिवारणार्थं कुमार इत्याद्यभिधानम्। इदानीं रूपकरूपेण कारणात्मानमाह—नीलः। दूर्वादलाभः। पतङ्गः पक्षी। हरितः। नीलः कृष्णोऽपि भवति तन्निवारणार्थं हरित इत्यभिधानं दूर्वादलश्यामलः। लोहिताक्षः। लोहिते रक्ते अक्षिणी यस्य स लोहिताक्षः। तडिद्गर्भः। सौदामिनीसंपातचञ्चलं दृष्टनष्टस्वभावं जगत्तडिच्छब्देनाभिधीयते तडिद्गर्भे यस्य स तडिद्गर्भः। इदानीं पक्षद्वयमाह—ऋतवः समुद्राः। वसन्ताद्याः षट्प्रसिद्धाः समुद्रा लवणोदादयः। यद्यपि सप्तैव तथाऽपि मधुराम्बुसमुद्रस्य सर्वत्रानुस्यूतत्वात्षडेवैतेऽपि गणनीयाः। तथा च पक्षयोरुभयोः समत्वम्। अथवा कालेन जले ब्रह्माण्डं जायते। तथा च कालजलयोः पक्षत्वकल्पनायां समुद्राणां सप्तत्वेऽप्यदोषः। कारणे कारणान्तरं वारयति–अनादिमत्। अनादिमान्। आदिः कारणं यस्यास्ति तदादिमन्नाऽऽदिमत्। त्वम्। कारणात्माऽश्वमेधयाजिनां ब्रह्माण्डान्तःस्थानां ब्रह्माण्डाद्बहिर्नयनाय वायोः समर्पकः। अनादिमत्त्वे हेतुः—विभुत्वेन वर्तसे। देशकालवस्तुपरिच्छेदशून्यत्वेन वर्तनं कुरुषे। यतः। यस्माद्भवतः। जातानि। उत्पन्नानि। भुवनानि। कर्मफलानि चतुर्दशलोकरूपाणि। विश्वा। विश्वानि सर्वाणि॥ ४॥

इदानीं जगत्कारणे त्रेधा परिच्छेदं मनसा विधाय रूपकरूपेण बन्धमोक्षव्यवस्थामाह। अजाम्। छागां मूलप्रकृतिं बुद्धया विनिःसारितचिद्रूपाम्। एकाम्। सजातीयभेदशून्याम्। लोहितशुक्लकृष्णाम्। रक्तश्वेतकृष्णवर्णां पिङ्गलधूम्रश्यामादीनां रक्तादिष्वेवान्तर्भावात्सर्ववर्णामित्यर्थः। अयं भावः—आत्मा तावदसङ्गोदासीनो निर्गुणो मायाऽपि चेत्तादृशी कृतं तत्कल्पनया। अत्यन्तासत एव चास्य चराचरस्योत्पादः स्यात्। ततः कल्प्यमानेयं यादृशं कार्यं तादृशी तदभिन्ना च कल्पनीया। तथा च कार्याणां तेजोबन्नानां यानि रूपाणि तानि मायायामपि सन्त्येव। ततो माया लोहितशुक्लकृष्णरूपा न विरुद्धेति। बह्वीः। अनेका अनन्ताः। प्रजाः। स्वकार्यभूताः। सृजमानाम्। सृष्टिं कुर्वाणाम्। सरूपाः। समानरूपा लोहितशुक्लकृष्णा इत्यर्थः। भूतभौतिकप्रपञ्चजातमिति भावः। अजः। छागो जीवः। हि। प्रसिद्धोऽस्मत्प्रत्ययालम्बनः। एकः। उपाधेरविद्याया ऐक्यादेकः। न चान्तःकरणमन्यदुपाधिः। तस्य कार्यत्वेनानित्यत्वात्। तन्नाशे जीवनाशात्कृतहान्यकृताभ्यागमप्रसङ्गात्। न चाविद्यामन्तरेणाकार्यमुपाध्यन्तरं किंचिदास्थातुं शक्यम्। शास्त्रविरोधात्। न चाविद्यायामनेकत्वं विनैकामविद्याम्। न चानेकासां स्वातन्त्र्यम्। कल्प-

नागौरवादिदोषात् । तस्मादेकैवाऽऽवरणरूपाऽविद्याऽनेकैर्विक्षेपरूपैराविर्भवत्याब्रह्मज्ञानम् । बदरीवाऽऽबदरीबीजदाहम् । न चात्र बन्धमोक्षयोरनुपपत्तिः कल्पितयोस्तयोः सत्त्वात् । वस्तुतस्तु न कस्यचित्पक्षे बन्धो मोक्षश्च संभवतीत्यलमतिविस्तरेण । जुषमाणः । सानुरागं सेवां कुर्वाणः । अहं दुःखी ममेदमनुकूलं प्रतिकूलं चेत्यादिप्रत्ययवानित्यर्थः । अनुशेते । निद्राणामनु निद्रां करोति । स्वयंप्रकाशोऽपि प्रकृतेर्जाड्येन तामात्मीयत्वेन मन्यमान आनन्दात्मानं न प्रत्येतीत्यर्थः । अयं बन्धः । इतः परं मोक्षः । जहाति । परित्यजति । एनाम् । मायामावरणविक्षेपरूपाम् । भुक्तभोगाम् । भुक्तो भोगो यया सा भुक्तभोगा तां ब्रह्मज्ञानाग्निना प्लुष्टसर्वाङ्गामित्यर्थः । अजः । छाग ईश्वरो नित्यावद्धो जनिमरणादिरहितो नित्यमुक्तः । अन्यः । चित्तेन कल्पितभेदो बद्धाद्यतिरिक्तः स्वयंप्रकाशमानसंविदानन्दात्ममात्र इत्यर्थः ॥ ५ ॥

सति प्रकृतौ संबन्धे बद्धाबद्धयोर्व्यवस्था न मायया संबन्धो बद्धाबद्धयोः संसारदशायामेकत्रादर्शनादित्याशङ्क्याविद्यां शरीरद्वयरूपिणीमधिदैवादिषु वृक्षत्वेन परिकल्प्य तत्त्वंपदार्थौ च पक्षित्वेनास्मान्बोधयितुं मन्त्र आह—द्वा । द्वावुभौ । सुपर्णा । सुपर्णौ । सुष्ठु पर्णौ पक्षौ ययोस्तौ सुपर्णौ जीवस्य धर्माधर्मौ पक्षावीश्वरस्याविद्यातत्संबन्धौ । सयुजा । सयुजौ । युक्संबन्धस्तादात्म्यं तेन सह वर्तमानौ सयुजौ । सखाया । सखायौ । जीवेनेश्वरः प्रसिद्धिं गतस्तेन च स तदिदं सखित्वमेतयोर्नियतोपकार्योपकारकत्वं वा श्रुत्युक्तं पातृत्वं पालयितृत्वं च । समानम् । उभयोरपि साधारणमविद्यादृष्टार्जितत्वात् । वृक्षम् । छेदनात्मकं विनाशनं शरीरद्वयम् । परिषस्वजाते । समन्तादालिङ्गनं कुर्वाते । इदानीं तयोरसाधारणं रूपं वक्तुमाह—तयोः । उभयोर्मध्ये । अन्यः । अविद्यातत्संबन्धपक्षाद्धर्माधर्मपक्षो जीवोऽन्यः । पिप्पलम् । धर्माधर्मफलं सुखदुःखरूपम् । स्वादु । उपभुज्यमानमासक्तिप्रदमुपभोगेन कदाचिदपि वैराग्यस्याजनकमित्यर्थः । अत्ति । भक्षयति । अहं सुखी दुःखीत्यादि मनुत इत्यर्थः । अनश्नन् । भोजनमकुर्वन्नहंममाभिमानशून्य इत्यर्थः । अन्यः । धर्माधर्मपक्षाव्द्यतिरिक्तोऽविद्यातत्सबन्धपक्ष ईश्वरः । अभिचाकशीति । सर्वतः प्रकाशते ॥ ६ ॥

ननु विरुद्धधर्मयोरेतयोः सखित्वमपि न मन्यामह इत्याशङ्क्याज्ञाननिमित्तं तन्न तु सति ज्ञाने तयोः सयुक्त्वादित्यभिप्रायवानाह—समाने वृक्षे । साधारणे शरीरे । पुरुषः । पुरिशयो जीवः । निमग्नः । निमज्जनं प्राप्तो जल इव पाषणः कर्तृत्वाद्यध्यासेन तिरस्कृतानन्दात्मरूप इत्यर्थः । अतः । अनीशया । अनीश्वरभावेनाहं सुखी दुःखीत्यादिना । शोचति । शोकं करोति । अनेन शरीरगृहक्षेत्रकलत्रादिना विना कथं भविष्यामीत्यादिरूपं दुःखं करोतीत्यर्थः । मुह्य-

मानः । अनाद्यविद्यावासनाविलासैः समुत्थितचिन्तासंतानस्तत्पारागमनेन मोहं विपरीतदर्शनं दर्शनाभावं वा स्तब्धतारूपं व्रजन् । कदाऽयमेवंरूपो ब्रह्मरूपो भवतीत्यत आह—जुष्टं यदा । आनन्दात्मप्रकाशसेवया परितुष्टं यस्मिन्काले । पश्यति । अवलोकयति साक्षात्करोतीत्यर्थः । अन्यम् । अविद्यातत्कार्यतत्संबन्धव्यतिरिक्तं स्वयंप्रकाशमानानन्दात्मरूपम् । ईशम् । अविद्यातत्कार्यतत्संबन्धानां नियन्तारमविद्योपाधिकस्य च स्वात्मनः । तदा अस्य । ईश्वरस्य । महिमानम् । आधिक्यं स्वयंप्रकाशमानानन्दात्माविर्भावरूपम् । इति । एति गच्छतित्यवबुध्यत इत्यर्थः । वीतशोकः । अपगतसमस्तशोककारणाविद्यः ॥ ७ ॥

नन्वीशश्चेद्ज्ञेयः स ब्रह्मरूपो ब्रह्म च वेद ऋगात्मकस्तद्व्याख्यानस्य यजुष्ट्वात्तद्गीतेश्च सामत्वादाथर्वणस्य च ऋग्विशेषत्वेनाविप्रतिपत्तेर्वेदानां चाङ्गादिविद्यास्थानत्वात्तेषामृगात्मकत्वस्योक्तत्वादृच एवेशादिशब्दवाच्यं ब्रह्मेत्यत आह-ऋचः । पादबद्धा वर्णाः । अक्षरे । व्यापिनि कारणे । तदव्याकृतमिति बुद्धिं वारयति—परमे व्योमन् । परमे व्योम्नि । अक्षरादुत्कृष्टे ब्रह्मण्याकाशवत्सर्वगते । केवलं शब्दाधिष्ठानमिदं न त्वर्थप्रपञ्चस्येत्यत आह—यस्मिन् । ऋगाधिष्ठाने । देवाः । अग्न्यादय इन्द्रियाणि वा भूतसाराणि सभूतानि । अधि विश्वे । सर्वे । निषेदुः । आधिक्येन सर्वतोऽवस्थानं कृतवन्तः । यः । अधिकारी । तत् । शब्दार्थाधिष्ठानभूतम् । न वेद । न जानाति । किम् । आक्षेपे । ऋचा । अपरेण शब्देन ब्रह्मणा तेन करिष्यति । स्पष्टम् । ये । प्रसिद्धाधिकारिणः । इत् । इत्थम् । तत् । ब्रह्म शब्दार्थाधिष्ठानभूतम् । विदुः । जानन्ति । ते । उक्ता अधिकारिणः । इमे । अस्माकं प्रत्यक्षशरीरा ब्रह्मज्ञानिनः । समासते । सम्यगुपवेशनं कुर्वन्ति । आनन्दात्मस्वरूपेण व्यापिनो भवन्तीत्यर्थः ॥ ८ ॥

ननु शब्दार्थयोरधिष्ठानं जगत्कारणं न च जगत्कारणमयमित्यत आह—छन्दांसि । गायत्र्यादीनि तैरुपलक्षिता ऋचः । यज्ञाः । ज्योतिष्टोमादयः । क्रतवः । संकल्पा उपासनानीत्यर्थः । व्रतानि । नियमरूपाणि भोजनकाल एवोदकपानादीत्यादीनि कृच्छ्रचान्द्रायणादिरूपाणि तपोविशेषात्मकानि वा । भूतं भव्यम् । अतीतं भावि च । किं बहुना, यच्च । यत्किंचिदपि । वेदा वदन्ति । वेदाः कथयन्ति । अस्मात् । शब्दार्थाधिष्ठानात् । मायी । केवलस्य स्रष्टृत्ववारणार्थं मायीत्युच्यते मायावी । सृजते । सृष्टिं कुरुते । विश्वम् । सर्वम् । एतत् । प्रपञ्चजातम् । तस्मिंश्च । ईश्वर आत्मन्यपि । अन्यः । धर्माधर्मपक्षो जीव ईश्वराद्व्यतिरिक्तः । मायया । अविद्यया । संनिरुद्धः । सम्यङ्निरोधं प्राप्तः । आत्मेश्वरयोस्तादात्म्यज्ञानहीन इत्यर्थः ॥ ९ ॥

ननु का च माया कश्च मायावीत्यत आह—मायां तु प्रकृतिम् । जगदुपादानकारणभूतां मायामेव । विद्यात् । जानीयात् । मायिनं तु महेश्वरम् । मायाविनं महतामग्न्यादीनां नियन्तारमेव । अस्य । मायाविनः । अवयवभूतैस्तु । एकदेशभूतैरेव । व्याप्तम् । विशेषेणाऽऽप्तं प्राप्तम् । सर्वम् । निखिलम् । इदम् । विविधप्रत्ययगम्यम् । जगत् । चेतनाचेतनात्मकम् ॥ १० ॥

ननु सन्ति सहस्रकारणानि जगतस्तेषां किं ब्रह्मत्वेन ज्ञेयत्वमित्यत आह—यः । प्रसिद्धः । योनिं योनिम् । कारणं कारणं वीप्सेयं सर्वकारणग्रहणार्था । आधितिष्ठति । अधिष्ठाय वर्तते । कारणाधिष्ठातृभेदं वारयति—एकः । भेदशून्यः सर्वकारणकारण इत्यर्थः । तथाऽप्ययं नोपादानकारणं निमित्तत्वेनाप्युत्पादकत्वोपपत्तेरित्यत आह—यस्मिन् । जगत्कारणाधिष्ठातरि । इदम् । विविधप्रत्ययगम्यं जगत् । सं च वि चैति । समेति च व्येति च सम्यग्गच्छति स्थितिं करोतीत्यर्थः । विविधं गच्छति विनाशमुपैतीत्यर्थः । आद्यश्चकार एतैः समा संबन्धार्थः । द्वितीयः स्थितिप्रलययोरपि कारणसमुच्चयार्थः । सर्वम् । निखिलमुत्पत्तिस्थितिप्रलयकारणत्वाद्ब्रह्मोपादानकारणमपीत्यर्थः । तम् । उक्तं कारणरूपम् । ईशानम् । नियन्तारम् । वरदम् । वरं भक्ताभिलषितमर्थं ददातीति वरदस्तम् । देवम् । स्वयंप्रकाशम् । ईड्यम् । स्तुत्यम् । निचाय्य । साक्षात्कृत्य । इमाम् । विद्वत्प्रत्यक्षाम् । शान्तिम् । आनन्दात्मप्रकाशरूपाम् । अत्यन्तम् । अतिशयेन । एति । गच्छति ॥ ११ ॥

पूर्वं प्रसङ्गात्पठितोऽपि मन्त्र इदानीं धातुः प्रसादोपायार्थं पुनः पठ्यते—'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु'। व्याख्यातो मन्त्रस्तृतीयेऽध्याये ॥१२॥

तर्हि वृद्धपितामहवदप्रयोजकः स नेत्याह—यः । प्रसिद्धः । देवानाम् । अग्न्यादीनां सेन्द्रियाणाम् । अधिपः । अधिष्ठाय पालयिता । यस्मिन् । देवानामधिपे । लोकाः । भूरादयः कर्मफलभूताः । अधिश्रिताः । अधिकत्वेनाऽऽश्रिताः । यः । प्रसिद्धः । ईशे । इष्टे । अस्य । प्रत्यक्षस्य । द्विपदः मनुष्यादेः । चतुष्पदः । गवादेः । कस्मै । एकस्मै । भेदशून्याय । देवाय । स्वयंप्रकाशाय । हविषा । हविष्प्रदानेनाग्निहोत्राद्याहुतिप्रक्षेपेण । विधेम । परिचरेम ॥ १३ ॥

तर्हि किं स एव पुरुषार्थ इत्याशङ्क्य नेत्याह—सूक्ष्मातिसूक्ष्मम् । अणोरतिशयेनाणुः सूक्ष्मादतिसूक्ष्मस्तम् । कलिलस्य मध्ये । नारीवीर्येण संगतं पौरुषं वीर्यमल्पकालस्थं कलिलमित्युच्यते । अथवा जगदारम्भकाणामपां बुद्बुदस्य पूर्वावस्था कलिलमित्युच्यते फेनिलान्युदकानीत्यर्थः । तस्यान्तः ।

विश्वस्य । सर्वस्य । स्रष्टारम् । उत्पादकम् । अनेकरूपम् । उपादानोपादेयनिमित्तनैमित्तिकादिभेदवन्तम् । विश्वस्यैकं परिवेष्टितारम् । व्याख्यातं तृतीयेऽध्याये । विश्वस्येत्यधिकारे सति पुनर्विश्वस्य ग्रहणमुपचारानिवारणार्थम् । ज्ञात्वा । साक्षात्कृत्य । शिवम् । मङ्गलमानन्दात्मस्वरूपम् । शान्तिमत्यन्तमेति । व्याख्यातम् ॥ १४ ॥

ननु लोके स्थितेः कर्ता विष्णुमनुराजादिरन्यः परमेश्वरादित्यत आह—स एव । पूर्वोक्तः परमेश्वर एव । काले । स्थितिकाले । भुवनस्य । लोकजातस्य कर्मफलभूतस्य । गोप्ता । रक्षिता । तत्र हेतुः—विश्वाधिपः । विश्वमधिष्ठाय पालयति यतः स चेदीश्वरो जगतोऽपि सहस्रगुणः स्यादन्यथा पालयितुमशक्यत्वादित्यत आह—सर्वभूतेषु । सर्वेषु स्थावरजङ्गमेषु । गूढः । गुप्तः सर्वबुद्धिसाक्षीत्यर्थः । कथमयं गूढ इत्यत आह—यस्मिन् । यद्दर्शननिमित्तम् । युक्ताः । योगमाश्रिताः । ब्रह्मर्षयः । ब्राह्मणाः सन्तोऽतीन्द्रियद्रष्टारः । देवताश्च । देवा अपि । तम् । सर्वस्य रक्षितारम् । एवम् । उक्तेन प्रकारेण । ज्ञात्वा । साक्षात्कृत्य । मृत्युपाशान् । मृत्योः प्राणवियोगस्य कर्तुः पाशाः कामक्रोधादयस्तान्सकारणं संसारमित्यर्थः । छिनत्ति । छेदं करोति ॥ १५ ॥

तर्हि किं सप्रपञ्चो ज्ञेय इत्याशङ्क्य नेत्याह—घृतात् । द्रवीभूतादाज्यात् । परम् । उत्कृष्टम् । मण्डमिव दध्नः सारभूतं मण्डशब्देनाभिधीयते घृतस्यापि सारभूतं घनत्वं प्राप्तं घृतमेव तद्वत् । अतिसूक्ष्मम् । अतिशयेनाणुभूतं सर्वप्रपञ्चसारभूतमित्यर्थः । ज्ञात्वा । साक्षात्कृत्य । शिवम् । मङ्गलम् । क्व । सर्वभूतेषु सर्वेषु स्थावरजङ्गमेषु । किं करचरणवन्नेत्याह—गूढम् । संवृतं बुद्धेरन्तःस्थितमित्यर्थः । गूढत्वेन परिच्छेदे प्राप्ते तं वारयति—विश्वस्यैकं परिवेष्टितारम् । व्याख्यातं तृतीयेऽध्याये । ज्ञात्वा देवं मुच्यते सर्वपाशैः । व्याख्यातं द्वितीये । ज्ञात्वेति पुनरभिधानमेवकारार्थम् । तथा च देवमेव ज्ञात्वैवेत्ययमर्थः संपद्यते ॥ १६ ॥

शिवं देवमेव ज्ञात्वैवेत्युक्ते कैलासादिस्थितमिति प्रसिद्ध्यनुसारात्स्यात्तन्निवृत्त्यर्थमाह—एषः । अस्मद्बुद्धेर्द्रष्टा । देवः । स्वयंप्रकाशः । विश्वकर्मा । सर्वोत्पादकः । महात्मा । महांश्चासावात्मेति महात्मा । अनेन प्रजापत्यादिव्यतिरेक उक्तः । तथाऽपि देशान्तरस्थस्यात्राऽऽगमनेनापि कदाचिद्बुद्धेर्द्रष्टृत्वं स्यादित्यत आह—सदा जनानां हृदये संनिविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति । व्याख्यातं तृतीयेऽध्याये । सर्वगतस्य कथं हृदयसंनिविष्टत्वमित्याशङ्क्य हृदेत्यादि पठनीयम् ॥ १७ ॥

ननु कदाऽयं मुच्यत इत्यत आह–यदा । यस्मिन्काले । तमस्तत् । तदात्मस्वरूपं तम आवरणशक्तिर्विक्षेपबीजभूताऽविद्या रज्जुरिव सर्पो रज्जुविज्ञानेनाऽऽत्मविज्ञानेनाविद्याया आत्मस्वरूपावस्थान आत्मतत्त्वं केवलमवशिष्यत इत्यर्थः । अथवा तत्प्रसिद्धं तमो यदा नेति वक्ष्यमाणो नकारः शृङ्खलान्यायेन संबध्यते । तमसोऽभावे दिवसः स्यादित्यत आह—न दिवा । दिवसो न । तर्हि रात्रिः स्यादित्यत आह—न रात्रिः । न विभावरी । नन्वहोरात्रयोरभावे कारणं कार्यमुभयं वा सत्स्यादित्यत आह—न सत् । कारणकार्यात्मकमस्तीति प्रत्ययविषयो न । अस्तु तर्हि सतोऽभाव एवेत्यत आह–न चासत् । नापि सदभावः । शिव एव । मङ्गल एव स्वयंप्रकाशमानानन्दात्मा न त्वन्यत्किंचित् । तथाऽपि ज्ञातृज्ञेयादिभेदः स्यादित्यत आह—केवलः । ज्ञातृज्ञेयादिभेदशून्यस्तदेति शेषः । अयमर्थः—आवरणात्मिकाऽहमज्ञः स्वयंप्रकाशमानमानन्दात्मानं न जानामीति प्रत्यक्षा । तस्या अधिष्ठानविषयस्वयंप्रकाशमानानन्दात्माविर्भाव आनन्दात्मत्वेनावस्थानाद्विक्षेपाणामपि निर्बीजानामभावादशेषविशेषशून्य आनन्दात्मैवावतिष्ठते । ननु कः शिव इत्यत आह—तत्[1] । तत्पदार्थलक्ष्यम् । तदपि किमित्यत आह—अक्षरम् । व्यापि समस्तपरिच्छेदशून्यमित्यर्थः । ननु तदभिधेयं लक्ष्यं वा प्रसिद्धं साऽक्षरस्य प्रसिद्धिरित्यत आह—तत् । प्रसिद्धम् । सवितुः । प्राणिनामुत्पादकस्य सर्वजनकस्येत्यर्थः । वरेण्यम् । वरणीयं प्रार्थनीयं वा स्वरूपम् । अनेन गायत्रीप्रतिपाद्यत्वेन द्विजातिमात्रप्रसिद्धिरुक्ता । इदानीं विशेषतो विदुषां प्रसिद्धिमाह–प्रज्ञा च । आत्मविद्याऽपि । तस्मात् । आनन्दात्मनः । प्रसृता । निर्गता । पुराणी । पुराऽपि नवीना सर्वदैकरूपाऽहं ब्रह्मास्मीतिवाक्यजन्येत्यर्थः ॥ १८ ॥

ननु वस्तूनां क्वचिद्देशे कस्यचिदुपलम्भो दृष्टस्तद्वदस्याऽऽत्मनोऽपीत्यत आह–नैनमूर्ध्वम् । स्वयंप्रकाशमानमानन्दात्मानमुपरिष्टात् । न तिर्यञ्चम् । एनमात्मानं तिर्यग्वर्तमानं न तिर्यगपि नेत्यर्थः । न मध्ये । एनमात्मानं दिशामन्तो न । परिजग्रभत् । पर्यग्रहीत् । ऊर्ध्वादिष्विदं संबध्यते । कोऽपि पुरुषः केनापि कारणेन कुत्रापि देश आनन्दात्मानं गृहीतवानित्यर्थः । ननु तर्हि कीदृशः स इत्यत आह–न तस्य प्रतिमाऽस्ति । तस्याऽऽनन्दात्मनः प्रतिमोपमाऽनेन सदृशोऽयमिति नास्ति । यस्य । प्रसिद्धस्य । नाम । प्रसिद्धम् । महत् सर्वेभ्योऽधिकम् । यशः । भूतभौतिकप्रपञ्चजातं कीर्तिस्वरूपम् । अथवा यस्य महद्यशो नाम नामधेयं तस्मिन्पक्षे प्रसङ्गादिदं नामोमिति व्याख्येयम् ॥ १९ ॥

---

१ क. ख. °त् । यत्प° ।

ननु तर्ह्यनियतदेशोऽयं चक्षुरादिजन्यः स्यादित आह—न संदृशे। सम्यग्दर्शननिमित्तम्। तिष्ठति रूपमस्य। आत्मनः स्वरूपं नावस्थानं करोति। तत्र हेतुः—न चक्षुषा पश्यति कश्चनैनम्। चक्षुषेत्युपलक्षणम्। अन्यैरपीन्द्रियैरेनमानन्दात्मानं कोऽपि नेत्रादिभिर्नावलोकयति यतस्ततो न संदृश इत्याद्यन्वयः। अयं भावः—नायं चक्षुरादिगम्यो घटादिवत्तादृशप्रतीतेरभावाद्बाधकस्य सत्त्वाच्चेति। तर्हि किमयमवेद्य एवेत्यत आह—'हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति'। व्याख्यातं तृतीये। अयमर्थः—स्वयंप्रकाशोऽप्यात्माऽऽदर्श इव भानुर्जल इव नभोऽतिस्वच्छायामन्तःकरणवृत्तावात्माकारपरिणतायां तत्र प्रतिबिम्बितो वृत्तिवेद्योऽयं ब्रह्मविद्भिरुच्यत इति तदभिप्रायं च मनसाऽभिक्लृप्त इति ॥ २० ॥

इदानीं प्रकृतमुपायमाह—अजातः। जनिरहितः। उपलक्षणमिदं सर्वभावविकाररहितः। अथवाऽज, अत इति पदच्छेदः हेऽज जन्मादिशून्य यस्मात्त्वत्प्रसादमन्तरेण नाऽऽत्मज्ञानं नाऽऽत्मज्ञानमन्तरेण च मुक्तिरतोऽस्मात्कारणात्। इति। यस्मादजात इत्यन्वयः। अथवा हेऽजेति यस्मादतोऽस्मादित्यन्वयः। एवम्। वक्ष्यमाणेन प्रकारेण। कश्चित्। शास्त्रदृष्ट्या त्वदभिन्नो वादिदृष्ट्याऽनिर्धारितरूपः पिशाच इव पामरदृष्ट्याऽस्य पुत्रः शिष्यइत्यादिरूपः साधारणदृष्ट्याऽहंशब्दप्रत्ययोल्लेख्यः। भीरुः। करालसंसारशूलसंदर्शनसंजातसंत्रासः। प्रपद्ये। अहं। शरणं प्राप्नुयां त्वामिति शेषः। रुद्र हे रुद्राविद्याविनाशक। यत्। प्रसिद्धम्। ते। तव। दक्षिणम्। दक्षिणसुषिसंबन्धिश्रोत्रमघोराख्यं हृदयस्य दक्षिणे सुषौ प्रतिष्ठितम्। मुखम्। आस्यं विषयोपलभ्यद्वारमित्यर्थः। तेन। वेदान्तश्रवणप्रवृत्तेन करणेन। माम्। संसारशूलादुद्विग्नं भवन्तं प्राप्तम्। पाहि। रक्ष। नित्यम्। सदा वेदान्तश्रवणाविहीनं श्रोत्रं कदाचिदपि मा भूदित्यर्थः ॥ २१ ॥

कृतसंन्यासानामुपायमुक्त्वा गृहस्थानां धातुः प्रसाद उपायमाह—मा नः। अस्माकम्। तोके। अपत्ये। स्त्रीपुंसात्मके। मा रीरिष इति। वक्ष्यमाणेनान्वयः। अपत्येष्वपि पुत्रोऽस्य लोकस्य साधनभूतस्ततो विशेषमाह—तनये। पुत्रे। मेति पूर्वोक्तं रीरिष इति वक्ष्यमाणम्। मा न आयुषि। आयुः पूर्णं शतसंवत्सरमरोगं जीवनं तस्मिन्नस्माकं मा रीरिष इति वक्ष्यमाणेनान्वयः। मा नो गोषु। अस्माकं द्विखुरेषु पशुषु। मा रीरिष इति वक्ष्यमाणेनान्वयः। मा नो अश्वेषु। अस्माकमेकशफेषु मा रीरिषो हिंसां मा कार्षीः। वीरान्। भ्रातृनन्यानपि स्निग्धानस्मत्कार्योत्साहिनो भृत्यादीन्। मा नः। अस्माकम्।

रुद्र । हे रुद्र । भामितः भामतो भामिनो बुद्ध्युत्साहादियुक्तानित्यर्थः । क्रुद्धो वा रुद्रः । वधीः । मा हिंसां कार्षीः । हविष्मन्तः । हवींषि ग्राम्या आरण्या ओषधयः पयःप्रभृतयश्च तद्वन्तो हविष्मन्तः । सदम् । सन्तं भवन्तं सदा वा । इत् । इत्थम् । त्वा । त्वाम् । हवामहे । त्वामुद्दिश्य होमं कुर्महे ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीमच्छंकरा-
नन्दभगवतः कृतौ श्वेताश्वतरोपनिषद्दीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

तत्त्वंपदार्थौ तृतीयेऽध्याये निरूपितौ यद्यपि तथाऽपि त्वंपदार्थो नात्यन्तं निरूपितस्तदर्थमयं पञ्चमोऽध्याय आरभ्यते । धातुः प्रसादोपायश्च चतुर्थेऽध्याये निरूपितः । स धाताऽप्यसाधारणलक्षणो वर्णनीयस्तदर्थमपि—द्वे अक्षरे । उभे अप्यक्षरशब्दाभिधेये । ब्रह्मपरे । ब्रह्मशब्दाभिधेये परे त्वनुपचरिते ब्रह्मणि । तुशब्दोऽपरब्रह्मव्यावृत्त्यर्थः । अनन्ते । देशकालवस्तुपरिच्छेदशून्ये परेऽनन्ते ब्रह्मणि द्वे अक्षरे शब्दब्रह्मकारणभूताविद्यारूपे ब्रह्मत्वेनोच्यमाने वर्तेते इति शेषः । विद्याविद्ये निहिते यत्र । ययोरक्षरयोर्विद्याविद्ये श्रुत्युक्ते निहिते प्रक्षिप्ते । गूढे । लोकैर्ज्ञातुमशक्ये । विद्याविद्ययोः स्वरूपं श्रुतिराह—क्षरं तु । विनाशिकार्यमेवाविद्यां विजानीयादिति शेषः । अविद्येति योक्ता तां कारणाक्षरे प्रतिष्ठितामित्यर्थः । अमृतं तु । अमृतभूतमात्मज्ञानमेवामृतस्य मोक्षस्य स्फुरणहेतुत्वाद्विद्यां जानीयादिति शेषः । विद्याशब्दाभिधेया या तां शाब्दे ब्रह्मणि प्रतिष्ठितामित्यर्थः । विद्याविद्ये । व्याख्याते । ईशते । ईष्टे । यस्तु । प्रसिद्ध एवाक्षरयोः परोऽनन्तोऽधिष्ठाता । सोम्य । हे सोमवत्प्रियदर्शन । यद्यप्यत्राऽऽऽख्यायिका न प्रस्तुता तथाऽपि षष्ठाध्यायान्ते श्वेताश्वतरोऽथेत्यादिलिङ्गेन श्वेताश्वतरस्य वक्तृत्वोपलम्भात्स हि स्वं शिष्यं संबोध्याऽऽह—सोम्येति । अथवा श्रुतिरेव संसारिणं संबोध्याऽऽह—सोम्येति ॥ १ ॥

इदानीमचेतनत्वमस्य कारणस्य व्यावर्तयति—यो योनिं योनिमधितिष्ठत्येकः । व्याख्यातं चतुर्थे । इदानीं भेदं व्यावर्तयति—विश्वानि रूपाणि । सर्वाणि वस्तूनि कार्यरूपाणि । योनीश्च योनयश्च । कारणरूपाणि वस्तूनीत्यर्थः । सर्वाः । निखिलाः । तथाऽपि कारणत्वेनैवाधिष्ठाता न तु चेतनत्वेनेति यो मनुते तं प्रत्याह ऋषिम् । अतीन्द्रियद्रष्टारम् । प्रसूतम् । प्रकर्षेणोत्पन्नम् । कपिलम् । वासुदेवस्यावतारभूतं सगरपुत्राणां दग्धारं न तु सांख्यप्रणेता कपिलः । नाममात्रसाम्येन तद्ग्रहणे स्यादतिप्रसङ्गः । अथवर्षिमतीन्द्रियद्रष्टारं प्रसूतमुत्पन्नमव्याकृतस्य प्रथमकार्यभूतं कपिलं विचित्रवर्णं ज्ञानक्रियाशक्त्या-

१ क. ख. भावितो ।

त्मकं हिरण्यगर्भमित्यर्थः । यः । प्रसिद्धः परमेश्वरः । तम् । कपिलम् । अग्रे । जगत उत्पत्तेः पूर्वम् । ज्ञानैः । अतीतानागतवर्तमानदूरान्तिकप्रवृत्तिनिवृत्त्यादिविषयैश्चित्तव्यापारैर्बुद्धिशब्दाभिधेयैः । बिभर्ति । पुष्णाति । न केवलमेतत्किंतु । जायमानं च । उत्पद्यमानमपि कपिलमन्यद्वा विश्वम् । पश्येत् । अवलोकयेत् ॥ २ ॥

इदानीमस्य च परमेश्वरस्य जगत्स्रष्टृत्वादिकर्माऽऽह—एकैकम् । प्रत्येकम् । जालम् । महेन्द्रजालं संसाररूपं प्रतिप्राणि व्यवस्थितमित्यर्थः । बहुधा । बहुप्रकारम् । विकुर्वन् । विविधं कुर्वन् । क । यस्मिन् । प्रसिद्धे । क्षेत्रे । सर्वप्राणिजनिस्थाने । संहरति । उपसंहरति । एषः । आत्मरूपः । देवः । स्वयंप्रकाशः । भूयः । पुनः । सृष्ट्वा । उत्पाद्य । पतयः । प्रजापतयः । प्रजापतीनित्यर्थः । तथा । यथा संसारजालं तद्वत् । ईशः । ईश्वरो नियन्ता । सर्वाधिपत्यम् । सर्वेषामाधिष्ठाय पालयितॄणां पालयितृत्वम् । कुरुते । करोति । महात्मा । महांश्चासावात्मा चेति महात्मा ॥ ३ ॥

सर्वाः । निखिलाः । दिशः । दिक्शब्दप्रत्ययविषयाः । इदानीं ता आह—ऊर्ध्वम् । उपरिष्टात् । अधश्च । अधस्तादपि । तिर्यक् । समन्तादष्टदिक्षु । प्रकाशयन् । प्रकाशं कुर्वन् । भ्राजते । स्वयं दीप्तिं कुरुते । यन् । आश्चर्ययन्गच्छन् । अनड्वान् । बलीवर्दो गौः सूर्य इत्यर्थः । एवम् । एवंपदादानाद्यथेति लभ्यते तथा सः । जगत्कारणभूतः । देवः । स्वयंप्रकाशः । भगवान् । षड्गुणैश्वर्यसंपन्नः । वरेण्यः । वरणीयः । योनिस्वभावान् । कारणभूतान् । आधितिष्ठति । अधिष्ठानं करोति । एकः । भेदशून्यः ॥ ४ ॥

यश्च । स्वभावम् । स्वभावः प्रसिद्धः । पदार्थस्वभावमपि कार्यकारणरूपं षड्भावविकाररूपं च । पचति । पाकं करोति । विश्वयोनिः । सर्वकारणभूतः । प्राच्यांश्च । पूर्वोत्पन्नानपि पदार्थान् । सर्वान् । निखिलान् । परिणामयेत् । परिणामं नयेत् । यः प्रसिद्धः । पूर्वः पचतिना योज्यः । अयं परिणामयतिना । सर्वम् । निखिलम् । एतत् । विविधप्रत्ययगम्यम् । विश्वम् । समस्तमविद्यातत्कार्यादि । अधितिष्ठत्येकः । व्याख्यातम् । गुणांश्च । लोहितादीन्गुणानपि सर्वान् । निखिलान् । विनियोजयेत् । विनियोगं कारयेदनेनैतदित्यादिरूपम् । यः । प्रसिद्धः । अयं विनियोजयतिना ॥ ५ ॥

तत् । कारणस्वरूपम् । वेदगुह्योपनिषत्सु । वेदेष्वृगादिषु गुह्या गोप्या उपनिषदस्तत्त्वमस्यहं ब्रह्मास्मीत्याद्या विद्यास्तासु । गूढम् । संवृतं निक्षिप्तमित्यर्थः । तत् । प्रसिद्धमुक्तम् । ब्रह्मा । हिरण्यगर्भः । वेदते । वेत्ति जानाति ।

ब्रह्म । सर्वस्मादधिकं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः[1] । योनिश्च । सर्वकारणमित्यर्थः । इदानीमेतज्ज्ञाने लाभमाह—ये । प्रसिद्धा अधिकारिणः । पूर्वम् । अस्मदादिभ्यः प्रथमम् । देवाः । अग्न्यादयः । ऋषयश्च । अतीन्द्रियद्रष्टारो मुनयः । चकारो मनुष्यादीनां समुच्चयार्थः । तम् । स्वयंप्रकाशमानन्दात्मानम् । विदु । जानन्ति ज्ञानवन्त इत्यर्थः । ते । देवादयः । तन्मयाः । ब्रह्मप्रधाना ब्रह्मैकस्वभावा इत्यर्थः । अमृता वै । मरणधर्मरहिता अविद्यातत्कार्यनिर्गमनेन प्रसिद्धाः स्मर्यमाणा वा श्रुत्या । बभूवुः । भवनं चक्रुः ॥ ६ ॥

इदानीं त्वंपदार्थमाह—गुणान्वयः । गुणेषु शुक्लनीलादिषु नाडीरूपेष्वन्वयः संबन्धो यस्य स गुणान्वयः । यः प्रसिद्धोऽहमितिप्रत्यये । फलकर्मकर्ता । फलस्य सुखदुःखरूपस्य कर्मणश्च धर्माधर्मरूपस्य कर्ता संपादकः फलकर्मकर्ता । नन्वीश्वरोऽपि तथेत्यत आह—कृतस्य । संपादितस्य । तस्यैव । सुखदुःखरूपस्यैव स्वार्जितस्य न त्वन्यस्येत्यर्थः । स च । स जीव एव । उपभोक्ता । सामीप्येनाहं सुखी दुःखीति भुजेः कर्ता चेत्यन्वयः । सः । जीवः । विश्वरूपः । सर्वविषयोपलम्भेन विश्वरूपः । त्रिगुणः । त्रयो गुणा अज्ञानभेदावस्थात्रये यस्य स त्रिगुणः । त्रिवर्त्मा । त्रयो वर्त्मानो मार्गा उत्तरो दक्षिणः कीटादिप्राप्तिरूपश्च यस्य स तथा । प्राणाधिपः । प्राणानधिष्ठाय पाति रक्षतीति प्राणाधिपः । संचरति । सम्यगिह लोके परलोके च गच्छति । स्वकर्मभिः । स्वार्जितैः पुण्यैः पापैश्च ॥ ७ ॥

अङ्गुष्ठमात्रः । अङ्गुष्ठपरिमाणः । यं यमो याम्यैः पाशैर्बद्ध्वा स्वबलेन सत्यवतः शरीरान्निश्चकर्ष । रवितुल्यरूपः । सूक्ष्मशरीरस्य तेजःप्रभूतत्वादतिस्वच्छत्वाच्च तस्मिन्नध्यस्ततादात्म्यस्याऽऽनन्दात्मनोऽपि स्वयंप्रकाशमानत्वादादित्यसमानरूपत्वेन रवितुल्यरूपत्वमविरुद्धम् । संकल्पाहंकारसमन्वितः । संकल्पो मनसो व्यापार इदं मे स्यादित्यादिरूपोऽहंकारोऽन्तःकरणव्यापारोऽहं मनुष्य इत्यादिरूपस्ताभ्यां समन्वितः संबद्धः । संकल्पेत्यादिविशेषणमीश्वरव्यावृत्त्यर्थं तस्यापि क्वचिदङ्गुष्ठमात्रत्वाभिधानात् । यः प्रसिद्धोऽहं कर्ता भोक्तेत्यादिप्रत्ययैः । बुद्धेर्गुणेन । बुद्धेर्मनसोऽन्तःकरणशब्दाभिधेयस्य गुणः कामादिस्तेन । आत्मगुणेन चैव । आत्मनश्चिदानन्दवपुषो गुणत्वेन व्यवह्रियमाणः प्रकाशसुखस्वच्छत्वसूक्ष्मत्वादिस्तेन । चकारो बुद्ध्यात्मगुणयोः समुच्चयार्थः । एवकारोऽवरपदेन संबध्यते । आराग्रमात्रः । प्रतोत्रस्य मुखनिहिता दृढा लोहसूचीसमानाऽऽरा तस्या अग्रं राजसर्षपादपि न्यूनं सुखं तन्मात्रस्तत्परिमाणोऽतिसूक्ष्म-

१ क. ख. °र्थः । इ° ।

 

इत्यर्थः । हि । प्रसिद्धः । अवरोऽपि । न वरः श्रेष्ठस्तत्पदार्थः । सोऽवरः । अपेराराग्रमात्रत्वेनान्वयः । दृष्टः । शास्त्रतः स्वानुभवतश्च विद्वद्भिरवलोकितः । बुद्धेर्गुणेनाऽऽत्मगुणेन चाङ्गुष्ठमात्र आराग्रमात्रोऽप्यवर एव दृष्ट इत्यन्वयः । न तु परस्तस्यानुपास्यस्यैवमवगन्तुमशक्यत्वादुपासनायाश्चात्राप्रस्तुतत्वादित्यर्थः ॥ ८ ॥

अङ्गुष्ठमात्रत्वं सूक्ष्मशरीरोपाधित्वेनाऽऽराग्रमात्रत्वं च बुद्ध्युपाधित्वेनौचित्यादङ्गीकरणीयमाराग्रमात्रत्वं चातिसूक्ष्मत्वेन न तु वस्तुतस्तत्परिमाणत्वेनेति दर्शयितुमाह––वालाग्रशतभागस्य । वालः केशस्तस्याग्रमग्रप्रदेशस्तस्य शतांशस्य । तस्यापि शतधा कल्पितस्य तु । शतप्रकारत्वेन कर्तुमशक्यत्वान्मनसा कल्पितस्य । केशशतांशशतांशः कर्तुमशक्यस्तथाऽपि तं मनसा परिकल्प्य तत्परिमाणो जीव इत्यवगन्तव्यमतिसूक्ष्म इत्यर्थः । तु पुनः । चेतिपाठे कल्पितस्यापीति व्याख्येयम् । भागः । अंशः । जीवः । प्राणानां धारयिता । सः । केशशतांशशतांशकल्पितभागसमः । विज्ञेयः । विशेषेणावगन्तव्यः । ननु किमर्थमयमतिसूक्ष्म एवं यद्यप्यतिसूक्ष्मस्तथाऽपि परमात्मनो भिन्नः स्यात्त्रसरेणुरिवाऽऽकाशादित्यत आह—स च । सोऽतिसूक्ष्म एव । अपगतायामविद्यायां सकार्यायामुपाधेरभावात् । आनन्त्याय । अनन्तत्वाय तत्पदार्थतादात्म्यायेत्यर्थः । कल्पते । समर्थो भवति ॥ ९ ॥

नन्वणुमात्रो यो जीवः स किंलिङ्ग इत्यत आह—नैव स्त्री । स्त्रीलिङ्गस्य स्वपरदुःखहेतुत्वात्प्रथमतस्तन्निराकरणं नारी नैव । तर्हिस्तु पुमानित्यत आह–न पुमान् । न पुरुषः । एषः । प्रत्यक्षोऽतिसूक्ष्मत्वेनोक्तो जीवः । तर्हिस्तु तृतीयव्यक्तिरूप इत्यत आह—नैव चायं नपुंसकः । अयमात्मा जीवो नपुंसकोऽपि नैव । न स्त्री पुमान् । न नपुंसकस्तद्रूपः स्वतो लिङ्गत्रयरहित इत्यर्थः । ननु तर्हि कथमेषा स्त्री । अयं पुमान् । एतन्नपुंसकं चेति व्यवहार इत्यत आह—यद्यत् । स्त्रियाः पुरुषस्य नपुंसकस्य वा । वीप्सा यदोऽत्र तदश्च वक्ष्यमाणानियत्यर्था । शरीरम् । विनाशिकलेवरम् । आदत्ते । स्वी करोति । तेन तेन स्त्रीशरीरेण पुंशरीरेण नपुंसकशरीरेण वा । स च । प्रसिद्धो लिङ्गत्रयरहित एव । अद्यते । भक्ष्यते तिरोभूतः क्रियते । एषा स्त्री । एष पुमान् । एतन्नपुंसकं योषित्पुरुषनपुंसकलिङ्गैः शरीरैर्योषित्पुरुषनपुंसकशब्दप्रत्ययविषयः क्रियत इत्यर्थः ॥ १० ॥

ननु यथा जनिवृद्ध्यादिकमस्य तथा लिङ्गत्रयमस्त्वित्यत आह—संकल्पनस्पर्शनदृष्टिहोमैः । संकल्पनं मानसो व्यापार इष्टानिष्टविषयः स्पर्शनं बाह्यवि-

---

१ क. ख. °व तथा° ।

षयोपलम्भः सुखदुःखजनकस्ते एव दृष्टी तयोरात्माग्नौ प्रक्षेपा होमा इदं मे स्यादिदं मा भूदहं गमनीयं पश्यामि जिघ्रामि शृणोमि रसयामि स्पृशामीत्यादिरूपास्तैः । न केवलमेतैः किं त्वस्मिन्स्थूले शरीरे । ग्रासाम्बुवृष्टया च । ग्रस्यत इति ग्रासोऽन्नमम्बु पानीयं तयोर्वृष्टिर्यावत्क्षुत्तृष्णानिर्गमनं ग्रसनपानरूपा तयाऽपि । आत्मविवृद्धिजन्म । आत्मनो जीवस्य विवृद्धिर्विविधा वृद्धिर्जन्म च विवृद्धिजन्म । एतदुक्तं भवति—इष्टानिष्टप्राप्तिपरिहारेच्छायां विविधविषयतज्जन्यसुखाद्युपलम्भस्तृप्तिश्चान्नपानाभ्यां तैरुपलम्भैस्तृप्त्या च निमित्तेन प्रयोजनभूतेनान्तःकरणसंबन्धेनाविचारितरमणीयेन देहगताञ्जन्मादिषड्भावविकाराननाद्यविद्यावशादात्मन्यध्यस्यतीति । नन्वविद्यावशाद्विषयोपलम्भः कस्मादयं व्यवस्थितः स्यादित्यत आह—कर्मानुगानि । कर्म धर्माधर्मरूपं तदनुगच्छन्तीति कर्मानुगानि तेन नियम्यमानानीत्यर्थः । अनुक्रमेण । जागरणे स्वप्ने चान्तःकरणधर्मस्य संबन्धस्य तत्संबन्धव्यापारस्य च नियतिमनु पश्चात्क्रमोऽनुक्रमस्तेन । देही । देहसंबन्धवाञ्जीवः । स्थानेषु । स्वप्नजागरितयोर्भेदेषु । रूपाणि । शब्दादिविषयस्वरूपाणि । अभिसंप्रपद्यते । सर्वतः सम्यङ्ममेदमिति प्राप्नोति ॥ ११ ॥

रूपाण्यभिसंप्रपद्यत इत्युक्तं कानि तानीत्यत आह—स्थूलानि । स्थूलशब्दप्रत्ययविषयत्वेन वर्तमानानि । सूक्ष्माणि । सूक्ष्मशब्दप्रत्ययविषयत्वेन वर्तमानानि । बहूनि चैव । स्थूलानि सूक्ष्माण्यप्यनन्तान्येव । रूपाणि । शब्दादिविषयस्वरूपाणि । देही । देहसंबन्धवाञ्जीवः । स्वगुणैः । आत्मीयान्तःकरणस्य गुणैर्ज्ञानेच्छादिभिः । वृणोति । स्वी करोति । ननु नियतप्राप्तिहेतुरीश्वर इत्यत आह—क्रियागुणैः । क्रिया क्रियाशक्तिः प्राणस्तस्य गुणः शरीरेहादिस्तैः । आत्मगुणैश्च । आत्मनोऽन्तःकरणस्य स्वात्मन्यध्यस्ततादात्म्यगुणस्य गुणैरदृष्टेच्छाज्ञानादिरूपैः । चकारः क्रियाज्ञानशक्त्योः समुच्चयार्थः । तेषाम् । शब्दादिविषयस्वरूपाणाम् । संयोगहेतुः । प्राप्तिहेतुः । अवरोऽपि । जीवोऽपि । अपिशब्दादीश्वरोऽपि शास्त्रतोऽयं त्वहमिदमनेन प्राप्स्यामीत्यभिसंधाय प्रवृत्तः सर्वप्राणिप्रत्यक्षो जीवो विषयसंयोगहेतुर्नासौ न तद्धेतुरिति निराकर्तुं शक्यः॥१२॥

इदानीं मन्त्राभ्यां तादात्म्यज्ञानस्य फलं विवक्षुस्तत्त्वंपदार्थयोर्भेदं भञ्जयन्नाह—अनाद्यनन्तम् । न विद्यत आदिरन्तश्च यस्य सोऽनाद्यनन्तो जनिमरणशून्यः[1] परमात्मा तम् । कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः । व्याख्यातं चतुर्थे । अपां पञ्च-

१ क. ख. °रे मरणस्य ।

म्यामाहुतौ योषिदग्नौ हुतानां फेनिलावस्था कलिलं तस्य मध्येऽनुशयी जीवस्तस्यानाद्यनन्तेन सामानाधिकरण्ये भेदगन्धो न स्यादित्यर्थः ॥ १३ ॥

इदानीं संक्षेपेणोक्तमुपायमुपेयं चार्थत उपसंहरति— भावग्राह्यम् । भावोऽन्तःकरणव्यापारः शब्दजन्यस्तेन गृह्यत इति भावग्राह्यस्तम् । अनिलाख्यम् । अनिलस्य वायोराख्याऽभिधानं प्राणस्य प्राणमित्यादिरूपं यस्य तम् । भावाभावकरम् । भावोऽविद्या सकार्या तस्याऽऽत्मसाक्षात्कारेणाभावो निवृत्त्याख्यस्तं करोतीति भावाभावकरस्तम् । शिवम् । मङ्गलभूतस्वयंप्रकाशमानानन्दात्मरूपम् । स्वज्ञानेन । कलासर्गकरम् । कलाः प्राणश्रद्धाखवायुज्योतिरप्पृथिवीन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामरूपाः षोडशसंख्याकास्तासां सर्ग उत्पत्तिस्तं करोतीति कलासर्गकरस्तम् । देवम् । स्वयंप्रकाशम् । ये । अधिकारिणः । विदुः । जानन्ति । ते उक्ताः । जहुः । त्यक्तवन्तस्त्यजन्तीत्यर्थः । तनुम् । साविद्यामिति शेषः । यथा पुनरादानं न कुर्वन्ति एवं शरीरं त्यजन्तीत्यर्थः ॥ १४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीमच्छंकरानन्दभगवतः कृतौ श्वेताश्वतरोपनिषद्दीपिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

धातुः प्रसादोपायो धातुः प्रार्थनादिकं धाता च जगत्कर्तृत्वादिगुणो दर्शितस्तद्गुणान्यपि तत्त्वानि वादिभिरनन्तान्यङ्गीकृतानि ततः कस्य चिद्धातुः प्रसादो मया संपादनीय इति व्याकुलितान्तःकरणमधिकारिणमवलोक्य मातेव सानुकम्पा श्रुतिः कालादिपक्षान्पूर्वपक्षीकृत्य स्वयंप्रकाशमानमानन्दात्मानं फलरूपं प्रतिपादयितुमन्तिममध्यायमारभते । यद्यप्ययमर्थः प्रथमेऽध्याय उक्तस्तथाऽपि तद्व्याख्यानत्वादुत्तरस्य सर्वस्य ततः पुनरभिधानं न दोषाय । स्वभावम् । तत्तत्पदार्थस्यासाधारणशक्तिरूपम् । एके । केचन । कवयः । क्रान्तदर्शिनः सोपः सं(सापेक्षं)वचनमिदं श्रुतेः । वदन्ति । कथयन्ति । कालम् । निमेषादिपरार्धपर्यन्तचिरक्षिप्रादिप्रत्ययकारणम् । तथा । यथा यैः प्रमाणैर्याभिर्युक्तिभिर्जगत्कारणं स्वभावं वदन्त्येके । तैरेव प्रमाणैस्ताभिर्युक्तिभिः कालं गजत्कारणं वदन्ति । अन्ये । स्वभाववादिभ्यो व्यतिरिक्ताः कालग्रस्तबुद्धयः । परिमुह्यमानाः । समन्तान्मोहं गच्छन्तः । एतौ पूर्वपक्षौ । इदानीं सिद्धान्तमाह— देवस्य । स्वयंप्रकाशमानस्य । एषः । प्रत्यक्षोऽहमज्ञ इत्यादिना । महिमा तु । महत्त्वं तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । लोके । अस्मिन्संसारमण्डले । येन । अविद्यारूपेण महिम्ना । इदम् । विविधप्रत्ययगम्यमविद्याप्रदर्शितम् । भ्राम्यते । भ्रमणं कार्यते व्योम्नीव मेघमण्डलं मातरिश्वना । ब्रह्मचक्रम् । ब्रह्मैव स्वावि-

धया विवर्तं गच्छच्चक्रं संसारचक्रमेकनेम्यादिगुणकमुक्तं ब्रह्मचक्रम् ॥ १ ॥

देवस्यैष महिमेत्युक्तं स देवः क इत्यत आह–येन । प्रसिद्धेन । आवृतम् । समन्ताद्वृतमाकाशेनेवतरत् । नित्यम् । सर्वदा । इदं हि । विविधप्रत्ययगम्यं प्रसिद्धम् । सर्वम् । विश्वम् । तथाऽप्यचेतनः स स्यादित्यत आह—ज्ञः । बोधस्वभावः । नित्यत्वमाह—कालकालः । कालः सर्वविनाशकारी तस्यापि विनाशकरः कालकालः । गुणी । गुणा अविद्याया अविद्याध्यासेन यस्य सन्ति स गुणी । अतो ज्ञस्वभावोऽपि सर्ववित् । सर्वं वेत्तीति सर्ववित् । यः । प्रसिद्धः । तेन । सर्वज्ञेन । ईशितम् । अधिष्ठितम् । कर्म । क्रियात्मकं पुरुषेणोपलभ्यमानम् । विवर्तते । पूर्वरूपापरित्यागेनावयविरूपं प्रतिपद्यते । यतः । ह । प्रसिद्धं विवर्तनम् । पृथ्व्याप्यतेजोनिलखानि । पृथ्व्यादीनि पञ्च महाभूतानि पृथिव्यादिपञ्चमहाभूतैर्विवर्तत इत्यर्थः । नन्वस्तु सर्वज्ञः कर्मणोऽधिष्ठातेश्वरः किमस्माभिस्तत्स्वरूपेण करणीयमित्यत आह—चिन्त्यम् । चिन्तनीयम् ॥२॥

तत् । ऐश्वरं रूपम् । ननु मनसोऽस्थिरत्वे कथं चिन्तनमित्यत आह–कर्म कृत्वा । कर्मणो ज्योतिष्टोमादेरनुष्ठानं विधाय । ननु बहिर्मुखस्य कथं चिन्तनमित्यत आह—विनिवृत्य । विशेषेण निवृत्तिं कृत्वा । विनिवर्त्येति पाठे मननादिककर्मव्यापारेभ्यो विच्छिद्य । भूयः । पुनः । तत्त्वस्य तत्त्वेन । तत्त्वमविद्या सकार्या तस्य तत्त्वमानन्दात्मस्वरूपं तेन । समेत्य । सम्यक्प्राप्य । योगम् । तदहमस्मीति । ननु कोऽसौ येन योगं गच्छेदित्यत आह—एकेन । अविद्यारूपेण । द्वाभ्याम् । धर्माधर्माभ्याम् । त्रिभिः । लोहितशुक्लकृष्णरूपैः । अष्टभिर्वा । पञ्चमहाभूतैर्मनोबुद्ध्यहंकारसहितैः । वाशब्दः कार्यविशेषेषु प्रकृतीनां समुच्चयार्थः । न केवलमेतैः किं तु—कालेन चैव । सृष्टिस्थितिसंहारकालेन नैवापि । आत्मगुणैश्च । आत्मनोऽन्तःकरणस्य गुणाः कामादयस्तैः । कालेन चेत्यत्र चकारः कालात्मगुणानामेकादिभिः समुच्चयार्थः । कालेन चैवेत्यत्रैवकारः सृष्ट्यादिकाले सृष्ट्यादिर्न पुनः सृष्टिकाले स्थित्यादिकमित्येतदर्थः । अत्रत्यश्चकार एकादीनामात्मगुणान्तानां करणानामात्मन्यध्यस्तत्वदर्शनार्थः । नन्वनुत्पन्ने जगति कुत आत्मगुणाः कामादय इत्यत आह—सूक्ष्मैः । कारणावस्थैः ॥ ३ ॥

आरभ्य । उत्पाद्य । कर्माणि क्रियमाणानि कार्याणि । गुणान्वितानि । लोहितशुक्लकृष्णगुणैः संबद्धानि । भावांश्च । अविद्यातत्संबन्धतदुपाधीनप्यकार्यानात्मन्यध्यस्तान् । सर्वान् । निखिलान् । विनियोजयेत् । विविधमनेनैतादित्थमित्यादिभिर्योगं कारयेत् । यः प्रसिद्धः । नन्वस्त्वेवंरूपोऽयमात्मा तत्पदार्थस्तथाऽपि भावैः किं प्रयोजनमित्यत आह—तेषाम् । अविद्यादीनाम् । अभावे ।

असत्त्वे । कृतकर्मनाशः । कृतस्यानुष्ठितस्य कर्मणः सुकृतदुष्कृतस्य नाशो वैयर्थ्यम् । नन्वस्तु वैयर्थ्यं को दोष इत्यत आह— कर्मक्षये । कर्मणो विनाशे वैयर्थ्ये । याति स तत्त्वतः । गच्छति प्रसिद्धोऽदृष्टार्थप्रमाणभूतो वेदस्तत्त्वतो यथार्थकथनाद्वेदस्य प्रामाण्यं स्यादित्यर्थः । तदपि कुत इत्यत आह—अन्यः । मृषावादी यथार्थकथनाद्व्यतिरिक्तः । अथवा यदि सर्वेषां भावानां विनियोजक ईश्वरस्तर्हि न कदाचिदपि संसाराब्धेः परपारगमनमित्यत आह—तेषामविद्यादीनामभावे कृतकर्मनाशस्ततः कर्मक्षये संसाराब्धेः परं पारं याति स जीवस्तत्र हेतुरविद्यादिभ्यस्तत्त्वतोऽन्यस्ततोऽविद्यादिनाशे स्वरूपेणावस्थानं परपारगमनमित्यर्थः ॥ ४ ॥

नन्वस्त्वेवं तथाऽपि नेश्वरं भवदुक्तं मन्यामहेऽविद्यातत्संबन्धानां स्वातन्त्र्यादित्यत आह—आदिः । प्रथमो हेतुशून्य इत्यर्थः । सः । परमेश्वरः । संयोगनिमित्तहेतुः । संयोगोऽविद्यासंबन्धस्तस्य निमित्तमविद्यैव कारणं तस्य हेतुराश्रयत्वेन विषयत्वेन च तन्निर्वाहकस्ततो नाविद्यादिकं स्वतन्त्रमित्यर्थः । ननु तर्हि काल एव स भूतो वर्तमान आगामी वेत्यत आह—परस्त्रिकालात् । उत्कृष्टो भूतवर्तमानानागतकालत्रयात् । अकलोऽपि । प्राणादिकलारहितोऽपि । दृष्टः । ब्रह्मविद्भिः साक्षात्कृतः । इदानीं मन्त्रद्रष्टा स्वानुभवं दर्शयति-तम् । अकलम् । विश्वरूपम् । नानारूपम् । भवभूतम् । संसाररूपम् । ईड्यम् । स्तुत्यम् । देवम् । स्वयंप्रकाशम् । स्वचित्तस्थम् । आत्मनोऽन्तःकरणस्थितम् । उपास्य । विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कृत्वा । पूर्वम् । प्रथमत आद्यं वा विदामेति तृतीयमन्त्रस्थेन संबध्यते ॥ ५ ॥

ननु विश्वरूपत्वे सर्वात्मत्वेनानित्यत्वादिदोषाः स्युरित्यत आह—सः । विश्वरूपः । वृक्षकालाकृतिभिः । वृक्षकालाकृतिभ्यो वृक्षः संसारः कार्यरूपः कालो भूतादिप्रत्ययालम्बन आकृतिरविद्या तेभ्यः । परः । उत्कृष्टः । परत्वं तत्त्वेऽप्यवयवविभागेन दृष्टम् । यथा शरीरत्वेऽपि मूर्ध्नस्तद्व्यावृत्त्यर्थमाह— अन्यः । तेभ्योऽत्यन्ताभिन्नः । अत्यन्तासतोऽपि तस्य तेभ्योऽन्यत्वं स्यादित्यत आह—यस्मात् । आत्मनो वृक्षादिव्यतिरिक्तात् । प्रपञ्चः । भूतभौतिकसंघातरूपः । परिवर्तते । समन्तान्निर्गच्छति । अयम् । विविधप्रत्ययगम्यः स कथमसन्स्यादित्यर्थः । यथा वयमुपास्य विदाम तथाऽन्येऽपि ज्ञात्वा विन्दन्तीत्यत आह—धर्मावहम् । धर्मं सुखैकहेतुं स्वभक्तानां समन्तात्प्रापयन्तीति धर्मावहस्तं धर्मावहम् । यागादिकं किं स इत्याशङ्क्य नेत्याह—पापनुदम् ।

पापं दुःखैकहेतुं स्वभक्तानां नुदति प्रेरयति विनाशयतीत्यर्थः । स पापनुत्तम् । ननु तर्ह्यैश्वर्यरूपः कश्चनायमित्यत आह—भगेशम् । भगः षड्गुणमैश्वर्यं तस्येशो नियन्ता । तम् । ज्ञात्वा । साक्षात्कृत्य । आत्मस्थम् । आत्मनि वर्तमानम् । अमृतम् । विनाशशून्यम् । विश्वधाम । विश्वस्य तेजः स्थानं वा विश्वधाम । अस्मद्विद्मातीति शेषः ॥ ६ ॥

तम् । प्रसिद्धं धर्मावहत्वादिनोक्तम् । ईश्वराणां । हिरण्यगर्भादीनाम् । परमम् । उत्कृष्टम् । न केवलमुत्कृष्टं किंतु—महेश्वरम् । महांश्चासौ नियन्ता चेति महेश्वरस्तमीश्वराणामीश्वरम् । द्वितीयतच्छब्दादानमुपचारनिवारणार्थम् । देवतानाम् । अग्नीन्द्रादीनाम् । परमं च दैवतम् । परमं दैवतं चोत्कृष्टं दैवतमपि । यद्यपीश्वराणामीश्वरत्वेनैव देवतानामपि दैवतत्वं सिद्धं तथाऽपि लोक ईश्वरेश्वराणामपि देवदेवत्वं न प्रसिद्धं ततो लोकप्रसिद्ध्यनुसारादविरोधोऽतो लोकप्रसिद्धिमनुसृत्यैवाऽऽह— पतिं पतीनाम् । ईश्वरेश्वरा देवदेवाश्चेन्द्रादयो न ते कश्यपादीनां प्रजापतीनां पतयोऽयं तु प्रजापतीनामपि पतिः पतिः पतीनां तम् । परमम् । सर्वस्मादुत्कृष्टम् । परस्तात् । अविद्यायाः परतः । विदाम । उपास्य तं साक्षात्करवाम । अन्याञ्शिक्षयितुं मन्त्रद्रष्टा लोट्प्रयोगमकरोत् । मन्त्रदर्शनात्पूर्वमेव मन्त्रद्रष्टुरात्मज्ञानस्योत्पन्नत्वात् । ततो मन्त्रद्रष्टरि लोटो लट्त्वेन व्याख्यानम् । देवम् । स्वयंप्रकाशम् । भुवनेशम् । लोकेशम् । ईड्यम् । ईड्यमित्यधिकारे पुनरीड्यमित्यभिधानमतिस्तुत्यमित्येतदर्थम् ॥ ७ ॥

इदानीं श्रुतिराह—न तस्य कार्यं करणं च विद्यते । तस्य प्रसिद्धस्याऽऽत्मनः कार्यमविद्याविक्षेपजातं करणं कारणमविद्याऽपि नास्ति । अथवा कार्यं शरीरं करणमिन्द्रियजातम् । न तत्समश्च । तेनाऽऽत्मना तुल्योऽपि न । ननु मा भूत्समोऽस्त्वधिक इत्यत आह— अभ्यधिकश्च । समन्तादधिकोऽपि । चकारेण नेत्यनुवर्तते पूर्वश्चकारोऽसमत्वानाधिकत्वयोः समुच्चयार्थः । दृश्यते । अवलोक्यते । ननु समाधिकत्वशून्य एक एवायं तथा च नास्य जगत्कर्तृत्वादिशक्तिः सत्त्वे वाऽस्मदादिशक्तेः समा सैवेत्यत आह—परा । सर्वशक्तिभ्य उत्कृष्टा । अस्य सर्वकारणस्याऽऽत्मनः । शक्तिः । सर्वकार्योत्पादनादिसामर्थ्यरूपाऽविद्येत्यर्थः । विविधैव । अनेकरूपैव स्वविक्षेपविलासैः । श्रूयते । शास्त्रादवगम्यते । सा किमागन्तुकेत्याशङ्क्य नेत्याह—स्वाभाविकी । स्वभावतः संबद्धाऽनादिसिद्धेत्यर्थः । विविधैवेत्युक्तं तस्या वैविध्यमाह—ज्ञानबलक्रिया च । ज्ञानमविद्यावृत्तिरन्तःकरणवृत्तिश्च वस्तुप्रकाशिका बलं प्राण उत्साहः प्रयत्न इत्यर्थः । क्रिया व्यापारमात्रं ज्ञानं च बलं च क्रिया चेति ज्ञानबलक्रिया । एकवचनत्वेऽप्यनपुंसकत्वं श्रौतम् । यद्यपि वेदान्तिनो ज्ञानक्रियाशक्ती

द्वे एव व्यवहरन्ति । तथाऽप्याविरोधो बलशक्तेः क्रियाशक्तावन्तर्भावाच्चकारात्संस्कारशक्तिः संबन्धशक्तिश्च ॥ ८ ॥

ननु शक्तिमतां प्रजापतीनां दक्षादीनां पतिर्हिरण्यगर्भो दृष्टस्तद्वदस्यापि स्यादित्यत आह—न तस्य । सर्वशक्तेरात्मनः । कश्चित् । कोऽपि । पतिः । पालयिता । अस्ति लोके । न विद्यते संसारे । ननु मा भूत्पालयिता पितृभ्यां हीनस्येव शिशोर्भवतु च नियन्तेत्यत आह— न चेशिता । नापि नियन्ता । चकारस्तस्यास्तीतिपदानुवृत्त्यर्थः । ननु सशरीरत्वानुमानेनोभयमपि संपादयितुं शक्यमित्यत आह—नैव च तस्य लिङ्गम् । तस्याऽऽनन्दात्मनो लिङ्ग्यते गम्यतेऽस्मिन्ननेन वाऽयमिति लिङ्गं शरीरमित्यर्थः । नैव । एवकारः पाक्षिकसत्त्वनिवारणार्थः । चकारोऽस्तीतिपदानुवृत्तिं कुर्वन्पतीशित्रभावाभ्यां लिङ्गाभावं समुच्चिनोति । सः । प्रसिद्धः । कारणम् । सर्वस्य हेतुः । करणाधिपाधिपः । करणादीनां चक्षुरादीनामधिपा अग्न्यादयस्तेषामधिष्ठाय पालयिता । नन्वेवंभूतोऽपि जायमानोऽस्त्वित्यत आह—न चास्य कश्चिज्जनिता । अस्याऽऽनन्दात्मनः कोऽपि जनितोत्पादकोऽपि न । मा भूदुत्पादकोऽविद्यावत्कश्चिदाधिष्ठाय पालयिताऽस्त्वित्यत आह—न चाधिपः । नाप्यधिष्ठाय पालयिता । आद्यश्चकारो जनकाधिपाभावयोः समुच्चयार्थः । द्वितीयोऽनुक्तसर्वसंसारधर्माभावसमुच्चयार्थः ॥ ९ ॥

इदानीं ब्रह्मज्ञानोत्पादनार्थं प्रार्थयते मन्त्रद्रष्टा—यः । प्रसिद्धः । तन्तुनाभ इव । लूताकीटवत् । तन्तुभिः । कार्यैः सूक्ष्मैस्तन्तुवत्सर्वत्रानुस्यूतैः । प्रधानजैः । प्रधानमव्याकृतमात्मावरणाविद्येत्यर्थः । तस्माज्जाताः प्रधानजाः । ननु तर्हि किंचित्प्रयोजनमुद्दिश्य करोति चेदनाप्तकामोऽयं स्यादित्यत आह—स्वभावतः । स्वभावात्प्रयोजनमन्तरेण लीलाकैवल्यन्यायेनेत्यर्थः । देवः । स्वयंप्रकाशः । एकः । भेदगन्धरहितः समावृणोति । सम्यगावृणोतीव भेदाभावात् । सः । भेदगन्धशून्यो व्यापी । नः । अस्माकम् । दधातु । धारयतु । ब्रह्म । सर्वस्मादधिकम् । अव्ययम् । व्ययशून्यमविनाशीत्यर्थः । स देवोऽस्माकं ब्रह्मसाक्षात्कारं करोत्वित्यर्थः ॥ १० ॥

ननु प्राप्यप्रार्थनादिभेदवान्किमयमित्यत आह—एकः । भेदगन्धशून्यः । नन्वयं चेत्प्रतीतः कथं भेदगन्धशून्यः । न चेन्नतरामित्यत आह—देवः । स्वयंप्रकाशः । ननु नाऽऽकाशे स्वयंप्रकाशस्तद्वेद्यानां सुखदुःखादीनामभावादित्यत आह—सर्वभूतेषु । चतुर्विधेषु जीवजातिभेदेषु । अयमर्थः—मा सन्त्वाकाशे सुखादयः प्राणिषु सत्त्वेन स्वयंप्रकाशेन साक्षिचैतन्येऽनन्ते तेषामुपलभ्यमा-

नत्वान्न स्वयंप्रकाशं साक्षिचैतन्यं नास्तीति। ननु यद्यस्ति कस्मादाबालगोपालं न प्रतीयत इत्यत आह—गूढः। अनाद्यविद्ययाऽहंममाभिमानेन च संवृतः। ननु वस्त्रादिसंवृतानां मण्यादीनां यथा परिच्छेदो दृष्टस्तद्वदस्यापि स्यादित्यत आह—सर्वव्यापी। आकाशवत्सर्वत्र व्याप्य वर्तमानः। ननु तद्वदेवानात्मा स्यादित्यत आह—सर्वभूतान्तरात्मा। सर्वभूतानां चतुर्विधप्राणिनां बुद्धेरभ्यन्तरोऽन्तरात्माऽस्मच्छब्दप्रत्ययव्यवहारयोग्यः सर्वभूतान्तरात्मा। अन्तरशब्दो बुद्धिव्यावृत्त्यर्थः। ननु तथा चेत्सुखदुःखयोर्भोक्ता संसार्येवायमित्यत आह—कर्माध्यक्षः। कर्मणां शुभाशुभफलानां धर्माधर्मरूपाणामध्यक्षो नियन्ता। तथा चेन्नैयायिकाद्यभिमतस्तटस्थ एवायमित्यत आह—सर्वभूताधिवासः। सर्वाणि भूतान्यात्मत्वेनाधिकृत्य वसतीति सर्वभूताधिवासः। सर्वात्मस्वरूप इत्यर्थः। ननु सर्वात्मा चेदयमहं कर्ता भोक्तेत्यादिप्रत्ययैरनुभूयमानः कथं स्वयंप्रकाशः स्यादित्यत आह—साक्षी। अहं सुखी दुःखीत्यादिप्रत्ययानां द्रष्टा यथा लोके विवदमानानां केषांचित्सुखदुःखभाजामन्यः सुखदुःखरहितस्तेषां द्रष्टा साक्षी। ननु साक्षी चेदयमात्मा करणादिमानपि स्यादित्यत आह—चेता केवलः। बोद्धैव न तु शरीरादिमान्। ननु बोद्धा चेज्ज्ञानगुणोऽयं स्यादित्यत आह—निर्गुणश्च। गुणगुण्यादिभेदशून्योऽपि चेता केवल इत्यन्वयः। स्वयंप्रकाशमानबोधैकस्वभाव आनन्दात्मेत्यर्थः॥ ११॥

नन्वेकोऽयं देवो यैर्ज्ञातस्तेषां को लाभ इतरेषां च का हानिरित्यत आह—एकः। भेदरहितः वशी। सर्ववशीकरणवान्। निष्क्रियाणां। क्रियारहितानां जडानामित्यर्थः। बहूनाम्। अनेकेषां सर्वजडानां नियन्तेत्यर्थः। कथं नियन्तेत्यत आह—एकम्। आवरणरूपेण भेदशून्यमविद्यास्वरूपम्। बीजम्। अनेकविक्षेपाङ्कुरभूसंसारवृक्षजनकम्। बहुधा। अनेकैः प्रकारैर्भूतभौतिकैः कामादृष्टादिभिश्च। यः। प्रसिद्धः। करोति। स्पष्टम्। तम्। बीजस्य बहुधा कर्तारम्। आत्मस्थम्। स्वान्तःकरणे वर्तमानम्। ये अधिकारिणः। अनुपश्यन्ति। वेदान्तवाक्यश्रवणमनु वयं ब्रह्म स्म इति साक्षात्कुर्वन्ति। धीराः। संसारसमुद्रमहोर्मिभूतैः कामक्रोधादिभिरविकम्पितात्मस्वभावा विजितेन्द्रिया इत्यर्थः। तेषाम्। वयं ब्रह्मेतिबुद्धिमताम्। सुखम्। अनुकूलवेदनीयम्। शाश्वतम्। शश्वन्निरन्तरं वर्तमानमविनाश्यानन्दात्मस्वरूपम्। आविर्भवतीति शेषः। नेतरेषाम्। वयं ब्रह्म स्म इतिबुद्धिरहितानां सुखं न कुतः शाश्वतं सुखमित्यर्थः॥ १२॥

ननु तर्हि नित्यश्चेतनः कश्चनाहमिति ज्ञातव्यो जीवश्च तथेत्यत आह—

नित्यः । अविनाशी । नित्यानाम् । अविनाशिनामाकाशादीनां लोकप्रसिद्धानां मध्ये । तथाऽपि चेतनवर्गे कथं प्राधान्यमित्यत आह—चेतनः । नित्यज्ञानस्वरूपः । चेतनानाम् । सोपाधिकानां जीवानां ज्ञानवतां मध्ये । एकः । भेदशून्यः । बहूनाम् । अनेकेषां देवादीनाम् । यः । प्रसिद्धः । विदधाति । विशेषेण धारयाति प्रयच्छतीत्यर्थः । कामान् । काम्यन्त इति कामा भोगास्तान्सुखदुःखरूपाणि फलानीत्यर्थः । *तम् । नित्यानां नित्यं चेतनानां चेतनम् । आत्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् । शान्तिरविद्यानिवृत्तिः शाश्वती शश्वद्वर्तमाना । अविद्यायाः पुनरुद्गमरहित आत्यन्तिको मोक्ष इत्यर्थः । व्याख्यातमन्यत् । ननु यच्छश्वत्सुखरूपं तद्वाङ्मनसातीतस्वरूपं वाचा वाऽयमात्माऽभिधीयत इत्यत आह—तदेतत् । एतदात्मस्वरूपं वाङ्मनसातीतं ब्रह्म प्रसिद्धम् । इति । वक्ष्यमाणेन प्रकारेण । मन्यन्ते । विद्वांसो जानन्ति । तन्मननप्रकारमाह—अनिर्देश्याम् । निर्देशो वाग्व्यापारस्तद्योग्यं निर्देश्यं तद्रहितमनिर्देश्यमुपलक्षणमिदं बाह्यान्तःकरणव्यापाराणामविषयः । तर्हि किमसन्नेत्याह—परमम् । उत्कृष्टं निरुपममवधिशून्यमित्यर्थः । किम् । सुखम् । आबालगोपालं प्रसिद्धं यदुद्दिश्य सर्वाश्चेष्टाः सर्वस्य । कथं नु । केन प्रकारेण । नु वितर्के । तत् । अनिर्देश्यं परमं सुखमहमधिकारी विजानीयां विशेषेण ज्ञानं कुर्याम् । ननु को विचार उपाये तज्ज्ञानेन तज्ज्ञेयमित्यत आह—किम् । तज्ज्ञानस्योपायत्वेऽपि । किं विचारे । उ । अपौ । ब्रह्मज्ञानेनापि ब्रह्म किं भाति प्रतीयते प्रकटी भवति विभाति वा विविधं विरुद्धं विपरीतं वेत्यर्थः । भाति व्याख्यातं वाशब्दः पक्षान्तरे । अयमर्थः–ब्रह्मज्ञानेन चेद्ब्रह्म प्रतीयते न वाङ्मनसातीतम् । तन्न प्रतीयते चेद्ब्रह्मज्ञानवैयर्थ्याच्छास्त्राप्रामाण्यमतोऽत्र विचारस्तेन ब्रह्मज्ञाने ब्रह्मबोधोपाये सत्यसत्यप्यतिसूक्ष्मबुद्धेरधिकारिणः कथं नु तद्विजानीयामिति चिन्ता युक्तेति । ननु यतो वाचो निवर्तन्त इति यो वेद निहितं गुहायामिति वचनयोर्विरोधेऽस्तु शास्त्रप्रमाणं न करणीया च मोक्षाकाङ्क्षेत्यत आह—तत् । प्रसिद्धम् । कारणम् । जगत्सृष्टिस्थितिसंहाराणां कर्तृ । सांख्ययोगाधिगम्यम् । सम्यक्ख्यायते प्रकाश्यत आत्मतत्त्वं येन विज्ञानेन तत्सांख्यं योगो जीवपरमात्मनोस्तादात्म्यज्ञानफलोऽष्टाङ्गयोगरूपो वैदिककर्मानुष्ठानादिरूपो वा । अधिगम्यं ताभ्यामहं ब्रह्मास्मीत्याधिक्येनातिशयेन साक्षात्कर्तुं शक्यम् । सांख्ययोगाभिपन्नमिति वा पाठः । ज्ञात्वा देवं मुच्यते

* एतद्व्याख्यानमूलभूता ऋक् नारायणदीपिकायां द्रष्टव्या ।

१ क. ख. °न्न । एतद्भ° ।

सर्वपाशैः । व्याख्यातम् । अयमर्थः—शाब्दप्रमाणजन्याऽऽत्मान्तःकरणवृत्तिर्जायते न कदाचिदप्यात्मा न घटसुखादिवच्छब्दस्य वाऽन्यस्य प्रमाणस्य वा विषयस्तेन विरोधाभावान्न शास्त्राप्रामाण्यंनापि मोक्षाकाङ्क्षापरित्यागँ इति ॥ १३ ॥

ननु वस्तुषु विचित्राः शक्तयो दृश्यन्ते कालनिमित्तादियोगाद्यथा भानोर्भाभिः पूरिते देशे चन्द्रतारकाग्न्यादीनां घटादेरप्रकाशकत्वं स्वस्यापि तेजोभिभवश्च तदभावे वैपरीत्यं तथाऽऽत्मनि स्वयंप्रकाश आत्माकारवृत्तौ प्रतीयमाने वाङ्मनसातीतेऽप्यस्त्वादित्यादिभाभिः प्रतीयमानत्वमित्यत आह—न तत्र । तस्मिन्नात्मस्वरूपविषये । सूर्यः । भानुः । भाति । न प्रकाशते । न चन्द्रतारकम् । चन्द्रश्च तारकाश्च चन्द्रतारकं सचन्द्रमुडुमण्डलं न भातीत्यनुषङ्गः । नेमाः । प्रत्यक्षा मेघमण्डलस्थाः पीतादिरूपाः विद्युतः । अचिरप्रभाः । भान्ति । न प्रकाशन्ते । कुतोऽयमग्निः । अयं प्रत्यक्षो भौमो वैश्वानरः कुतो भातीत्यनुषङ्गः । ननु तस्मिन्विषये न भान्त्येते चेत्तदत्यन्तं तमस्तोमरूपमित्यत आह—तमेव । सूर्यादेरविषयमेव । भान्तम् । प्रकाशं कुर्वन्तम् । अनु । पश्चात् । भाति । प्रकाशते । सर्वम् । चन्द्रसूर्यादिकं ज्योतिर्जातम् । ननु राजानं गच्छन्तमनुगच्छति चेद्भृत्यादिः सोऽपि स्वतन्त्रो गन्ता स्यात्तथा चाऽऽत्मा प्रकाशको यथा तथा सूर्यादिकमपि प्रकाशकं स्वतन्त्रं तथा च प्रकाशकानामात्मना समःमात्यन्तिको भेदो यथा तेषां तथा जडानामपि स्यादित्यत आह—तस्य । प्रकाशात्मनः । भासा । दीप्त्या तद्बोधव्याप्त्येत्यर्थः । सर्वम् । प्रकाश्यं प्रकाशकं च निखिलम् । इदम् । सूर्यादि घटापटादि च प्रत्यक्षम् । विभाति । विविधमिदं प्रकाश्यमिदं प्रकाशकं च भाति प्रकाशते न स्वतन्त्रं ततो न भेदशङ्केत्यर्थः ॥ १४ ॥

ननु यथा सूर्यादीनांसर्वप्रकाशकानां सजातीयविजातीयभेदो दृष्टस्तद्वदस्याप्यस्त्वित्यत आह—एकः । स्वगतसजातीयविजातीयभेदशून्यः । हंसः । आत्मज्ञानेन भेदं हन्तीति हंसः । भुवनस्यास्य मध्ये । अस्य प्रत्यक्षस्यैकदेशस्य भुवनस्य लोकस्य कर्मफलस्य मध्येऽन्तः । इदानीं चैतन्यस्य विशेषतोऽग्नौ सलिले च संनिधिं दर्शयितुमाह—स एव । प्रसिद्धो हंस एव न त्वन्यः । अग्निः । अपां जनकस्तेजोरूपः । सलिले । नीरे स्वकार्ये । संनिविष्टः । कारणरूपेण सम्यङ्निवेशनं कृतवान् । तमेव विदित्वाऽति मृत्युमेति नान्यो हेतुर्विद्यत ईशनाय । हेतुः कारणभूत ईशनायेश्वरत्वाय मोक्षायेत्यर्थः ॥ १५ ॥

ननु यः सर्वात्मा सर्वेशो बन्धमोक्षादिकारणं तं ज्ञात्वा मृत्युमत्येति न चायं स इत्यत आह—सः । प्रसिद्धः । विश्वकृत् । सर्वस्य कर्ता । विश्ववित् । सर्वज्ञः ।

आत्मयोनिः । स्वयमेव कारणं स्वस्य जात इत्यर्थः । अथवाऽऽत्माऽन्तःकरणं ज्ञानक्रियाशक्तिर्हिरण्यगर्भ इत्यर्थः । तस्य योनिः कारणम् । तर्ह्यव्याकृतमेतदित्यत आह—ज्ञः । बोधैकस्वभावः । बोधानां कालग्रस्तत्वादयमपि तथेत्यत आह—कालकालः । विनाशकस्य विनाशकः । तर्हि कोपकालाग्निरुद्रः कश्चनेत्यत आह—गुणी । सर्वेषां गुणानामाश्रयभूतः । तर्ह्यस्तु जीवविशेषः कश्चन तथेत्यत आह—सर्ववित् । सर्वज्ञः । नात्राप्युपचारः शङ्कितुं शक्यः । विश्वविच्छब्दस्योपचरितत्वेन शङ्कितस्योपचारस्यागमनात् । यः । प्रसिद्धः सर्वेषु वेदान्तेषु । तथाऽप्यविद्याजीवयोः स्वातन्त्र्ये नायमेवंरूप इत्यत आह—प्रधानक्षेत्रज्ञपतिः । प्रधानं माया क्षेत्रज्ञो जीवस्तयोः पतिः पालयिता । ननु गुणैरेव लोहितादिभिस्तौ भोग्यभोक्तृभावेन पाल्येते इत्यत आह—गुणेशः । गुणानां लोहितशुक्लकृष्णानामीशो नियन्ता गुणेशः । नन्वस्तु गुणेशो बन्धमोक्षस्थितिकारणं यत्तदेव निरङ्कुशं नियन्तृ न तु गुणानां नियन्तेत्यत आह—संसारमोक्षस्थितिबन्धहेतुः । संसारोऽध्यात्ममधिभूतं चाहंममाभिमानस्तस्मान्मोक्षः स्वयंप्रकाशमानानन्दात्माभिव्यक्तिस्तत्र स्थितिः संस्काराविद्यायाः सकार्याया दाहरूपे पुनरुत्थानाभावरूपा बन्धः संसारबन्धोऽहंममाभिमानस्य दार्ढ्यं स्वयंप्रकाशमानानन्दात्मज्ञानशून्यत्वेनाहं सुखी दुःखीदमद्य मया लब्धमित्यादिप्रत्ययसंतान इत्यर्थः । संसारमोक्षस्थितिबन्धस्य हेतुः कारणं संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥

एवं चेत्प्रधानक्षेत्र[ज्ञ]योर्भिन्नोऽयमात्मेत्यत आह—सः । प्रसिद्धः । ईश्वरः । तन्मयः । तत्प्रधानः प्रधानक्षेत्रज्ञरूप इत्यर्थः । हि । प्रसिद्धः । अमृतः । मरणधर्मरहितः । ईशसंस्थः । ईश आत्मस्वरूपे भूम्नि स्वे महिम्नि संस्था सम्यगवस्थानं स्थितिर्यस्य स ईशसंस्थः । अचेतनत्वं वारयति—ज्ञः । बोधैकस्वभावः । परिच्छेदं वारयति—सर्वगः । त्रिविधपरिच्छेदशून्यः । भुवनस्य । लोकस्य कर्मफलरूपस्य । अस्य । विविधप्रत्ययगम्यस्य । गोप्ता । रक्षिता । यः । प्रसिद्धः । ईशे । ईष्टे गोप्तॄणामपि नियन्तृत्वं केषांचिन्न दृष्टं तथाऽयं मा भूदिति य ईश इत्यभिधानम् । तथाऽप्येकदेशस्येशितृत्वमिति मतिं वारयति—अस्य । विविधप्रत्ययगम्यस्य । जगतः । सायुज्यस्य कार्यस्य । नित्यमेव । सदैव । ननु नैवकारं सहामहे स्वकार्यं प्रत्यन्यस्यापि हेतोरीशितृत्वादित्यत आह—नान्यः । एतस्मादात्मनो व्यतिरिक्तः । हेतुः । कारणभूतः । विद्यते नास्ति । ईशनाय । नियमनाय सर्वात्मकत्वादीश्वरस्य ॥ १७ ॥

---

१ क. ख. °पर्यस्या° ।

अस्येश्वरस्य ज्ञाने कारणत्वेन तत्प्रसादे तृतीयेऽध्याय उक्तेऽप्युपायः प्रसङ्गात्पुनः संक्षेपेणात्राभिधीयते—यः। प्रसिद्धः। ब्रह्माणम्। हिरण्यगर्भम्। विदधाति। विविधसामर्थ्ययुक्तं दधाति। उत्पादयतीत्यर्थः। यो वै वेदांश्च। प्रसिद्धः स्मर्यमाण ऋग्वेदादीनपि। प्रहिणोति। प्रकर्षेण समर्पयति। तस्मै। ब्रह्मणे। तं ह। पूर्वोक्तं प्रसिद्धम्। देवम्। स्वयंप्रकाशम्। आत्मबुद्धिप्रकाशम्। स्वबुद्धिसाक्षिणम्। मुमुक्षुर्वै। मोक्षार्थी प्रसिद्धः। शरणम्। रक्षितारम्। अहम्। मुमुक्षुः। प्रपद्ये। शरणं प्राप्तोऽस्मि॥ १८॥

शरण्यस्य स्वरूपमाह—निष्कलम्। निर्गताः प्राणाद्याः कला यस्मात्तं निष्कलम्। ननु क्रियावत्त्वात्कलावत्त्वं स्यादित्यत आह—निष्क्रियम्। क्रियाशून्यम्। ननु परिणामित्वादस्तु क्रियाऽपीत्यत आह—शान्तम्। अपरिणामिनम्। नन्वविद्यादोषदूषितत्वेन परिणामी स्यादित्यत आह—निरवद्यम्। निर्गतमवद्यं दुष्टत्वमविद्यादिरूपो दोषो यस्मात्तं निरवद्यम्। ननु सकारणानां दुष्टत्वमपि दृष्टमित्यत आह—निरञ्जनम्। निर्गतमञ्जनं कारणं यस्मात्स निरञ्जनस्तं निरञ्जनम्। अमृतस्य। अविनाशिनो मोक्षस्य। परम्। उत्कृष्टम्। सेतुम्। विधारणरूपं मोक्षमर्यादाकारणमित्यर्थः। तत्र दृष्टान्तः— दग्धेन्धनमिव। भस्मीकृतमहाकाष्ठसंचयं यथा। अनलम्। वैश्वानरम्। शरणं प्रपद्य इति पूर्वेणान्वयः॥ १९॥

ननु ब्रह्मज्ञानार्थमयं श्रमस्तच्च दुःखविघातार्थं स चेदन्यतः सिद्धः किमनेनाकिंचित्करेणेत्यत आह—यदा। यस्मिन्काले। चर्मवत्। यथा चर्म। आकाशम्। अमूर्तं नभः। वेष्टयिष्यन्ति। वेष्टनं करिष्यन्ति। मानवाः। मनोजाताः। तदा। तस्मिन्काले। देवम्। स्वयंप्रकाशम्। अविज्ञाय। अहं ब्रह्मास्मीतिविशेषेणाज्ञात्वा। दुःखस्य। आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नप्रतिकूलवेदनीयस्य। अन्तः। विनाशः। भविष्यति। स्पष्टम्॥ २०॥

एतद्विज्ञानं नाल्पभाग्यानां सुलभमित्याह—तपःप्रभावात्। तपसः कृच्छ्रचान्द्रायणादेः स्वधर्मानुष्ठानस्य वा प्रभावः सामर्थ्यं तस्मात्। देवप्रसादात्। देवस्य स्वयंप्रकाशस्याऽऽनन्दात्मनः प्रसादादनुग्रहादपि। अथवा देवस्य द्योतनात्मकस्यान्तःकरणस्य प्रसादान्नैर्मल्यादपि। चकारो वेदानुवचनादीनां समुच्चयार्थः। ब्रह्मवित्। ब्रह्म वेदशब्दं साङ्गं सम्यग्वेत्तीति ब्रह्मविदीश्वरसम इत्यर्थः। तत्र नामकथनेनैवोपपत्तिमाह—श्वेताश्वतरः। श्वेता अवदाताः सदाऽन्तर्मुखत्वेन विपरीतप्रवृत्तिरहिता अश्वा इन्द्रियाणि यस्य स श्वेताश्वः। अति-

१ क. ख. °णत°।

शयेन श्वेताश्वः श्वेताश्वतरः । अष्टाङ्गयोगनिरत इत्यर्थः । ननु समग्रविद्यावित्त्वमष्टाङ्गयोगनिरतत्वं वाऽस्त्यनेकेषां ब्रह्मज्ञानशून्यं श्रमकरं तथा चान्येभ्यो नास्य कश्चिद्विशेष इत्यत आह—अथ । साधनचतुष्टयसंपत्त्यनन्तरम् । विद्वान् । स्वयंप्रकाश आनन्दात्मसाक्षात्कारवान् । विद्वानित्यनन्तरमथशब्द उक्तार्थोऽवतारणीयः । यथापाठे स्वेनैवार्थस्याग्रहे शब्दजालाष्टाङ्गयोगनिरतेभ्यो वैलक्षण्यार्थोऽप्यर्थो वा व्याख्येयः । अत्याश्रमिभ्यः । अति तुरीयस्य तुरीयो भेदः पारमहंस्यलक्षणः सर्वोत्कृष्ट आश्रमः प्रसिद्धो येषामस्ति तेऽत्याश्रमिणस्तेभ्यः साधनचतुष्टयसंपत्त्यनन्तरम् । परमम् । उत्कृष्टमुत्कृष्टपुरुषार्थप्राप्त्युपायत्वात् । पवित्रम् । शुद्धिकारणमशेषपापबीजाविद्यादाहकत्वात् । विशेषणसामर्थ्याद्विशेष्यमनुक्तमपि ब्रह्मज्ञानं लभ्यते । प्रोवाच । प्रकर्षेण दयार्द्रचित्तत्वादिना संसारसागरपरप्राप्त्युपायमुक्तवान् । सम्यक् । सं समीचीनं स्वयंप्रकाशमानानन्दात्मानमञ्चति गच्छतीति सम्यक् । ऋषिसंघजुष्टम् । ऋषयो नारायणनारदव्यासादयस्तेषां संघाः समूहास्तैः प्रीतान्तःकरणैः सेवितमृषिसंघजुष्टम् ॥ २१ ॥

इमानि विशेषणानि यथाकथंचिन्मन्त्रसाध्यादिफलानामपि स्युस्ततोऽत्यन्तासाधारणं विशेषणमाह—वेदान्ते । वेदानामृगादीनामनेकशाखाभेदभिन्नानामन्ता अवसानानि प्राप्याणीत्यर्थः । ते वेदान्तास्तज्जातौ वेदान्ते । तत्रापि सन्ति सहस्रमुपासनानि वितानानि चेत्याह—परमम् । उत्कृष्टम् । उत्कृष्टत्वमपि दहरोपासनादावस्त्येव तव्द्यावृत्त्यर्थमाह—गुह्यम् । गोप्यम् । दहरोपासनादिसाध्यं कथमदोऽवसीयत इत्यत आह—पुराकल्पप्रचोदितम् । पुराकल्पोऽर्थवादो गो(वो)पादेयत्वेन बोधितप्रवेशनियमनलक्षणः पञ्चविधस्तेन प्रचोदितं प्रकर्षेणोपादेयत्वेन बोधितम् । अर्थवादः स्तावको यत्स्तूयते तद्विधीयत इत्यर्थः । इदानीं श्रुतिः सानुक्रोशं प्राप्तब्रह्मज्ञानानुररीकृत्याऽऽह—नाप्रशान्ताय । प्रकर्षेण मनःपूर्वा शान्तिर्यस्य स प्रशान्तस्तव्द्यतिरिक्तोऽप्रशान्तस्तस्मै । दातव्यम् । यच्छेताश्वतरोऽत्याश्रमिभ्य उक्तवाञ्श्रुतिसारसर्वस्वं पुरुषार्थनिदानभूतं तच्छुन इव पायसं न देयम् । एवं चेत्प्रशान्तायानुपसन्नायापि देयमित्यर्थतः प्राप्तं तद्वारयति—नापुत्रायाशिष्याय वै पुनः । पुत्रो ब्राह्मादिविवाहजायां पत्न्यां जात औरसो लोक्यस्तनयः । दृष्टान्तोऽयं यथाऽस्मिन्नुपसन्नेऽनुरागस्तथाऽन्यस्मिन्नपि चेज्जायतेऽधिकारिणि स त्वनुशासनयोग्यो न पुत्रोऽपुत्रो न शिष्योऽशिष्यः । अपुत्रोऽशिष्यस्तस्मा अपुत्रायाशिष्याय वै प्रसिद्धाय गुरुशिष्याध्यायादौ पुनःशब्दोऽप्यर्थ एवार्थो वा । अप्रशान्ताय न दातव्यमपुत्रायाशिष्याय प्रसिद्धायापि न दातव्यमित्यनुषङ्गः । अधिकारिणे पुत्रवत्प्रियाय देयं नेतरस्मा इत्यर्थः ॥ २२ ॥

ननूपसन्नाय देयमित्यर्थादुक्तं कीदृश्युपसत्तिः किंप्रयोजना चेत्यत आह— यस्य । प्रसिद्धस्याधिकारिणः । देवे । हरौ हरेऽन्यस्मिन्वाऽऽरोपिते चैतन्ये शालग्रामादौ । परा । निरतिशयाऽयमेव मे सर्वं पुरुषार्थजातं दास्यत्यस्मिन्संतुष्टेऽहं कृतकृत्यः स्यां विपर्यये विपर्यय इत्यादिरूपा । भक्तिः । आस्तिक्यबुद्ध्यादियुक्ता भजनक्रिया कायेन्द्रियमनसां तस्मिन्समर्पणमित्यर्थः । सेयम् । यथा । दृष्टान्ते । देवे । उक्ते । तथा । दार्ष्टान्तिके । गुरौ । ब्रह्मज्ञानोपदेष्टरि गुरोरर्थस्य साधको गुरुस्तस्मिन्गुरौ । देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न देवोऽपि यतस्ततो देवस्यापि वरमवज्ञा करणीया न गुरोरित्यर्थः । तस्य । गुरुभक्तस्य एते कथिता हि । उक्ताः प्रसिद्धा उपायोपेयभूताः प्रत्यक्षा इव । अर्थाः । विषयप्रयोजनरूपाः । प्रकाशन्ते । इदमनेनेत्थमिति प्रतीयन्ते । महात्मनः । महान्गर्वादिरहित आत्माऽन्तःकरणं यस्य स महात्मा तस्य । इति । उपनिषत्समाप्तौ ॥ २३ ॥

योऽस्ति स्फुरन्नविरतं हृदयाब्जमध्ये हंसो नृकान्तारमदो विगाह्य ।
पिबन्नमुं भेदमनीशमीशः प्रीतः स भूयादमुना कृतेन ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपाद-
शिष्यस्य शंकरानन्दभगवतः कृतौ श्वेताश्वतरोप-
निषद्दीपिकायां षष्ठोऽध्यायः ॥ ६ ॥

---

समाप्तेयं श्वेताश्वतरोपनिषद्दीपिका ।

# अथ श्वेताश्वतरोपनिषद्दीपिका नारायणविरचिता ।

---

श्वेताश्वतरसंज्ञेयं षडध्यायविराजिता ।

याजुष्युपनिषत्पञ्चाशत्तमी ग्रन्थसंग्रहे ॥ १ ॥



साक्षाद्ब्रह्मविद्यादर्शनं श्वेताश्वतरोपनिषद्व्याख्यायते । ॐ ब्रह्मवादिनो[2] वदन्तीति । वेदवादिनो विचारयन्तीत्यर्थः । मन्त्रैरेव प्रश्नपूर्वमुत्तरम् । किं कारणं ब्रह्मेत्यादि । जगत्कारणीभूतं यद्ब्रह्म तत्किम् । यद्वा ब्रह्म सर्वमहत्किं कारणम् । यस्यान्यत्कारणं नास्ति यच्च सर्वस्य कारणं तत्किमिति प्रश्नः । कुतः[3] स्म जाताः । वयं कुतो जाता ब्रह्मणोऽन्यस्माद्वाऽजाता एव वा । जीवाम केन केन जीवाम जाताः सन्तः केन[4] कारणेन जीवामः । क च संप्रतिष्ठाः । वयं क प्रतिष्ठिताः किमाधाराः केन चाधिष्ठिता नियमिताः सुखदुःखेषु वर्तामहे स्वतन्त्राणां प्रवृत्तौ दुःखेष्वप्रवृत्तिप्रसङ्गात् । ब्रह्मविदो व्यवस्थां चिन्तयाम इति शेषः ॥ १ ॥

कालो ज्योतिषप्रसिद्धः । स्वभावो[5] लौकायतिकसंमतो वस्तुधर्मः । नियतिर्यथाऽग्निरूर्ध्वमेव[6] ज्वलति वायुस्तिर्यगेव पवत इति नियमरूपा । यदृच्छा[7] कालभार्या ययाऽकस्माद्घनो वर्षति भूमिः कम्पते लाभालाभौ भवतः । यदुक्तम्—यदृच्छालाभसंतुष्ट इति । भूतानि यथा मातापितृभ्यां पुत्रजन्म । योनिः रूपवयवस्तेन स्त्री लक्ष्यते । सा च प्रकृतिर्मायाऽविद्येत्यनर्थान्तरम् । पुरुष आत्मा मन इति यावत् । इत्येषां मध्ये किं कारणादिरूपमिति चिन्त्यम् । संयोग एषाम् । एषां सप्तानां संयोगो[8] वाऽष्टमः कारणादीति[9] प्रश्नः । अष्टानामपि निषेधो न त्विति । न तु । एते न हेतवः । एषां संयोगः समुदायोऽपि न हेतुः । कुत आत्मभावात् । आत्मनश्चेतनस्य विद्यमानत्वात्कालादीनामचेतनत्वाच्चेतनानधिष्ठितानां प्रवृत्त्यसंभवादस्वातन्त्र्यादात्मनश्चेतनस्य सविधे कर्तृत्वमनुचितमिति भावः । तर्ह्यात्मन एव जीवस्य कर्तृत्वमस्तु चेतनत्वात्स्वातन्त्र्याच्चेत्यत आह—आत्माऽप्यनीशः । कुतः । सुखदुःखहेतोः । इच्छन्नपि सुखं नाऽऽप्नोति । अनिच्छन्नपि च दुःखमाप्नोति । तेन पारतन्त्र्यान्न जगत्कर्ता[10] ॥ २ ॥

एवं दिङ्मूढा इव ते विमूढा ब्रह्मणः पथि देवतानुग्रहेण ध्यानपरा बभूवुः । तदाह—त इति । ते मुनयो ध्यानयोगमनुगताः सन्तोऽपश्यन्दृष्टवन्तः । कां देवा-

---

१ क. ख. °ता । यजु° । २ क. दिन इति । ३ क. कुत इति । व° । ४ ग. °न कर° । ५ क. ख. °वो लोका° । ६ ग. घ. °र्ध्व एव । ७ ग. घ. °च्छा । य° । ८ क. ख. °योगश्चाष्टमं का° ९ क. ख. °रणमिति । १० घ. °र्ता ॥ २ ॥

त्मशक्तिं देवस्याऽऽत्मनः शक्तिं परमात्मसामर्थ्यम् । नन्वियन्तं कालं किं न दृष्टेत्यत आह—स्वगुणैर्निगूढां निजगुणैर्जीवनिष्ठाविद्यादिभिर्दृष्टेरावृतत्वाज्ज्ञातुमशक्यां जीवेन मीलितचक्षुषेव सूर्यप्रभाम् । स को देव इत्यत आह—य इति । कारणानि पूर्वोक्तानि निखिलानि सकलानि कालादीन्यात्मान्तानि । कालात्मयुक्तानीत्याद्यन्तग्रहणेन प्रत्याहारात्सर्वेषां मध्यस्थानां संग्रहः । अधितिष्ठति स्वायत्ती करोति । एकोऽसहायः सन् ॥ ३ ॥

स्थूलदेहोपाधिं प्रथमं दृष्टमात्मानं चक्ररूपकेण तावन्निरूपयितुमाह—तमिति । तमाबालगोपालमहमिति प्रसिद्धं पुरुषविधम् । एकनेमिम् । एकैव नेमिश्चक्रधारणहेतुः कुण्डलीलक्षणा चिच्छक्तिर्यस्य तम् । त्रिवृतम् । वातपित्तकफात्मकत्वात्त्रिगुणत्वाद्वेडापिङ्गलासुषुम्नालक्षणनाडीत्रयग्रथितत्वाद्वा त्रिवृत्करणपक्षे पृथिव्यप्तेजोरूपत्वाद्वा । षोडशान्तं षोडशविकारस्वरूपम् । ते च विकारा एकादशेन्द्रियाणि पञ्च भूतानि च यद्वा षोडशान्ता मर्मस्थानानि यस्य तम् । तानि च धारणास्थानत्वेन प्रपञ्चसारे गणितानि—

' अङ्गुष्ठगुल्फजानुद्वययोनिगुदं च सीवनी मेढ्रम् ।
नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासा च ॥
भ्रूमध्यललाटसुषुम्नाग्रं द्वादशान्तमित्येवम् ' इति ।

षष्ठप्रश्नोक्ता वा षोडश कला अन्तः स्वरूपं यस्य तम् । ताश्च प्राणः श्रद्धा भूतानीन्द्रियं मनोऽन्नं वीर्यं तपो मन्त्राः कर्म लोका नाम चेति । अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति मन्त्रवर्णात् । यद्वा । अमावास्यया सह षोडशतिथिभिरन्तः परिणामो यस्येति । अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहर इति विश्वः । शतार्धारम् । शतार्धं पञ्चाशदरा यस्य तत् । षट्चक्रसमुदायस्य पञ्चाशत्पत्रत्वात् । तानि चाऽऽधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञाख्यानि चतुःषड्दशद्वादशषोडशद्विपत्राणि पत्राणां चारातुल्यतयाऽरात्वम् । तदुक्तम्—आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्क इति । विंशतिप्रत्यराभिः प्रत्यन्तस्थिताभिरराभिरङ्गुलिभिरुपलक्षितम् । अब्जकैः षड्भिः । अब्जानां पूर्वोक्तषट्चक्राणां कैः शिरोभिः कर्णिकाभिः षड्भिरुपलक्षितम् । अक्षकैरिति पाठेऽकारादिक्षकारशीर्षैर्वर्णैरुपलक्षितम् । तदुक्तम्—वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां हंक्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमा-

१ घ. ध. °थे कण्ठदेशे ल° । २ ग. घ. °युक्ते स° ।

मीति । विश्वरूपैकपाशम् । विश्वरूपं नानारूपं पूर्वाग्रहुतप्रहुतमनोवाक्प्राणमयोऽभिधानं यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेतिश्रुतेः प्राणसहितमन्नं तदेवैकः पाशो बन्धहेतुर्यस्य । अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना । बध्नामि सत्यग्रन्थिना मनश्च हृदयं च त इति मन्त्रलिङ्गात् । त्रिमार्गभेदम् । अर्चिर्मार्गो धूममार्गोऽधोगतिश्चेति त्रयो मार्गभेदा यस्य तम् । मुक्तिमार्गस्य देहातीतविषयत्वात् । द्विनिमित्तैकमोहम् । द्वे सुखदुःखे तन्निमित्तो हेयोपादेयत्वेनैको मोहो यस्य तम् । अपश्यन्निति पूर्वेणान्वयः । शाखाचन्द्रन्यायेन प्रथमं देहात्मदर्शनमेवोचितम् ॥ ४ ॥

ये उक्त एतेभ्यो[3] भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति तच्छक्तिं पातञ्जलमतसिद्धां प्रवृत्तिमूलामविद्यारूपां बुद्धिं नदीरूपकेण निरूपयति—पञ्चस्रोतोम्ब्विति । पञ्चस्रोतः पञ्चप्रवाहमम्बु विषयवासनारूपं यस्याः सा । पञ्चयोनिः पञ्चेन्द्रियाणि योनिरुत्पत्तिस्थानं यस्याः सा । अनित्याशुचिदुःखानात्मसु विपरीतज्ञानमविद्या तस्य चेन्द्रियेभ्य एवोत्पत्तिः । उग्रा दुस्तरत्वात् । वक्रा निषिद्धगामित्वात् । यद्वोग्रत्वं वि[.]येभ्यो निरोद्धुमशक्यत्वाद्वक्रत्वं चाभिमानेनान्योक्तविपरीतकारित्वात्ततश्चतुर्णां कर्मधारयस्ताम् । पञ्चप्राणोर्मिं पञ्च प्राणाः प्राणापानव्यानोदानसमानास्त एवोर्मयस्तरङ्गा उच्छलनस्वभावा यस्याः सा ताम् । प्राणद्वारैव बुद्धेः प्रसादात् । प्राणनिरोधेन केवलकुम्भके बुद्धिनिरोधदर्शनात् । पञ्चबुद्ध्यादिमूलाम् । बुद्धिर्मनश्चित्तमहंकारो विषयवासना चेति पञ्च बुद्ध्यादयो मूलं परमकारणं यस्यास्ताम् । यद्वा पञ्च शब्दादयस्तेषां बुद्धिर्निर्विकल्पकज्ञानं तदेवाऽऽदिमूलं प्रथमकारणं यस्याः सविकल्पकरूपायास्ताम् । पञ्चावर्ताम् । पञ्चाऽऽवर्ता उदकभ्रमा विषयरूपा आसङ्गहेतवो गतिप्रतिबन्धका यस्यां सा ताम् । पञ्चदुःखौघवेगाम् । रूपरसगन्धस्पर्शशब्दाः पञ्च विषयास्तदलाभविपरीतलाभप्रयुक्तानि पञ्च दुःखानि तेषामोघो भरः स एव वेगो यस्याः सा ताम् । पञ्चाशद्भेदाम् । पञ्चाशद्दलगामिनि चित्ते पञ्चाशद्बुद्धयो जायन्ते । तदुक्तमध्यात्मविवेके—

गुदलिङ्गान्तरे चक्रमाधारं तु चतुर्दलम् ।
परमः सहजस्तद्वदानन्दो वीरपूर्वकः ॥
योगानन्दश्च तस्य स्यादीशानादिदले फलम् ।
स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य तु ॥

१ ग. घ. सप्तप्र° । २ क. यदुक्तमेत° । ३ घ. एभ्यो ।

पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ।
प्रश्रयः क्रूरता गर्वनाशो मूर्छा ततः परम् ॥
अवज्ञा स्यादविश्वासो जीवस्य चरतो ध्रुवम् ।
नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ॥
सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा ।
लज्जा भयं घृणा मोहः कुधियोऽथ विषादिता ॥
हृदयेऽनाहतं चक्रं दलैर्द्वादशभिर्युतम् ।
लौल्यं प्रणाशः कपटवितर्कोऽप्यनुतापिता ॥
आशाप्रकाशश्चिन्ता च समीहा समता ततः ।
क्रमेण दम्भो वैकल्यं विवेको हुंकृतिस्तथा ॥
फलान्येतानि पूर्वादिदलस्थस्याऽऽत्मनो विदुः ।
कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ॥
तत्र प्रणव उद्गीथो हुं फड्वषडथ स्वधा ।
स्वाहा नमोऽमृतं सप्त स्वराः षड्जादयो मताः ॥
इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश । इति ।

षोडशच्छदे त्वन्यत्र विशेष उक्तः—१ कृपा २ क्षमा ३ आर्जवम् ४ धैर्यम् ५ वैराग्यम् ६ धृतिः ७ समता ८ हास्यम् ९ रोमाञ्चनिचयः १० ध्यानम् ११ सुस्थिरता १२ गाम्भीर्यम् १३ उद्यमः १४ सत्त्वम् १५ औदार्यम् १६ एकाग्रता, एते पूर्वादिपत्रेषु गुणा इति । द्विदले तु तत्त्वंपदार्थावभासो द्रष्टव्यः । एवं पञ्चाशद्भेदाः[1] । यद्वोंकारस्य पञ्चाशत्कलास्ताभ्यः पञ्चाशद्वर्णा वर्णात्मा च वेदो वेदोद्भवं च जगत् । बुद्धिर्जगद्विषया[2] सती तत्कारणीभूतान्पञ्चाशद्वर्णानवगाहत इति पञ्चाशद्भेदा भवति[3] । तथा[4] पञ्चपर्वाम् । रूपादिविषयभेदेन पञ्चसोपानाम् । अथवाऽन्नप्राणमनोविज्ञानानन्दरूपाः पञ्च कोशा एव पर्वाणि यस्यास्ताम् । अथवाऽविद्यास्मितारागद्वेषाभिनिवेशलक्षणानि पञ्च पर्वाणि । अनित्याशुचिदुःखानात्मसु विपरीतज्ञानमविद्या भिन्नयोर्बुद्ध्यात्मनोरेकत्वप्रतीतिरस्मिता सुखेष्वासक्ती रागो दुःखेष्वप्रीतिर्द्वेषोऽननुभूतादपि मरणादेस्त्रासोऽभिनिवेशः पञ्चापि बुद्धिविशेषत्वाद्बुद्धिपर्वाणि । अधीमः स्मराम इक्स्मरण इङिकावध्युपसर्गतो न व्यभिचरतः ॥ ५ ॥

---

१ ग. °द्भेदाम् । य° । २ ग. घ. °द्विश्व जग° । ३ क. ख. °वन्ति । त° । ४ क ख. °था च प° ।

सर्वाजीव इति । सर्वेषामाजीवे जीवनहेतौ भोगायतनत्वात् । सर्वसंस्थे । सर्वेषां संस्था वागादीनां स्थितिर्यस्मिन्बृहन्ते बृहति स्थूले तस्मिन्ब्रह्मचक्रे शरीरे हंसो भ्राम्यते कर्मभिर्नानायोनीः प्राप्यते । यद्वा हंसो जीवः पञ्चाशद्दलेषु पञ्चाशद्बुद्धिजननार्थं वासनाभिः कर्मसहिताभिर्भ्राम्यत इत्यर्थः । पृथक्संघाताद्भिन्नं प्रत्येकतश्च भिन्नमात्मानं परमहंसं[1] प्रेरितारं च प्रेरितेश्वरः । तदुक्तं गीतासु—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति ॥

ईश्वरं निरूप्य भोक्ता भोग्यं प्रेरितारं च मत्वेत्यग्र उपसंहाराच्च प्रेरितेश्वरः पृथग्भिन्नं मत्वा ज्ञात्वा ततोऽनन्तरं तेन परमात्मना जुष्टः प्रीतः सन्नमृतत्वं मोक्षमेति । जुषी प्रीतिसेवनयोः ॥ ६ ॥

उद्गीतमिति । एतत्परमं ब्रह्मोद्गीतं प्रकटमेव वेदादिभिर्गीतं प्रकाशितम् । तस्मिन्नात्मनि विषयभूते त्रयं वेदत्रयं वाचकत्वेन वर्तते । सुप्रतिष्ठाक्षरं प्रणवाक्षरं च तत्र वर्तते । वेदो ह्योंकारे प्रतिष्ठितः । अग्निमीळ इत्यकारमुपक्रम्य ऋग्वेदारम्भात्समुद्रो बन्धुरित्युकारेण यजुर्वेदसमापनादग्न आयाहीत्यकारेणोपक्रम्य ज्योतिरुत्तममितिमकारेण सामवेदसमापनात्प्रणवस्य चाकारोकारमकारात्मकत्वात्प्रतिष्ठाक्षरत्वम् । यद्वा । निवृत्तिः सुप्रातिष्ठा स्याद्विद्या शान्तिरनन्तरम् । शान्त्यतीतेति पञ्चकलाश्रयत्वात्सुप्रतिष्ठाक्षरत्वम् । अत्राऽऽत्मन्यन्तरं भेदं प्रपञ्चाद्विदित्वा ज्ञात्वा वेदविदो वेदार्थस्य ज्ञातारस्तत्परास्तदेकाग्रा योनिमुक्ता जन्मरहिताः सन्तो ब्रह्मणि लीना इत्यन्वयः ॥ ७ ॥

संयुक्तमेतदिति । संयुक्तं परस्परसंबद्धम् । क्षरं स्थूलदेहः । अक्षरं सूक्ष्मदेहः । व्यक्तं स्थूलम् । अव्यक्तं लिङ्गम् । एतद्विश्वं सर्वमीशः परात्मा[2] भवते प्राप्नोति । भू प्राप्तावात्मनेपदी वा । अनीशो जीवो बुध्यतेऽनुभवत्याभिमन्यते भोक्तृभोगान्भोक्तारं चाऽऽत्मानं भोगांश्च स एव देवं परमात्मानं बुद्ध्वा सर्वैः पाशैर्बन्धनैर्मुच्यते मुक्तो भवति ॥ ८ ॥

ज्ञस्तत्पदार्थः । अज्ञस्त्वंपदार्थः । अजावनादी । एक ईशः समर्थः । अन्योऽनीशोऽसमर्थः । अजा माया चैका भोक्त्रा जीवेन भोगेन विषयानुभवेनार्थैर्विषयैश्च युक्ता संबद्धा । परमात्मा त्वसङ्गोऽनन्तस्तत्त्वंपदार्थशोधनसिद्धः । स हि विश्वरूपः सर्वाध्यासाधिष्ठानमकर्ता च गगनवत् । त्रयं जीवमीश्वरं शुद्धं च यदा विन्दते लभते ब्रह्म ह्येतत् । बोधानन्तरं यत्स्वरूपमवशिष्यते ब्रह्मैवैतत् ॥ ९ ॥

१ ग. घ. °हंसप्रे° । २ क. परमात्मा ।

श्री राम, शिव शरण

क्षराक्षयोः स्वरूपमाह–क्षरमिति । प्रधानं माया । अमृताक्षरमुद्देश्यविधेययोरपि गमकत्वात्समासः । अक्षरममृतम् । तयोरीश्वरनियम्यतामाह—हर इति । हरः शिव एको देवः क्षरात्मानौ क्षरं चाऽऽत्मानं चाक्षरमीशत ईष्ट ऐश्वर्येण व्याप्नोति । तद्भक्तेर्मुक्तिहेतुतामाह–तस्येति । अभिध्यानमाभिमुख्येन स्मरणम् । योजनं सबीजयोगविषयत्वम् । तत्त्वभावो यथार्थस्वरूपभावनम् । स एवाहमिति भावनं वा । भूयः पुनः पुनरभिध्यानादिनाऽन्ते देहान्ते विश्वस्याः सर्वस्या मायाया निवृत्तिः । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति श्रुतेः ॥

' कृष्णे रताः कृष्णमनुस्मरन्ति
रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते भिन्नदेहाः प्रविशन्ति कृष्णं
हविर्यथा मन्त्रहुतं हुताशे, इति स्मृतेश्च ॥ १० ॥

उक्तमर्थं स्पष्टयति–ज्ञात्वेति । देवं परमाशिवं पाशा बन्धनानि तेषामपहानिः । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशास्तैः क्षीणैः सद्भिर्हेतुभूतैः । तृतीयं यत्र तत्त्वंपदार्थावेकीभूतौ तं सगुणध्यानपक्षे तृतीयस्यामितो दिवीत्युक्तं हिरण्यगर्भस्थानं देहभेदे शरीरावसाने कीदृशं तृतीयं विश्वैश्वर्यं विश्वमेवैश्वर्यं यस्य तम् । केवलो दग्धपाश आप्तकामः पूर्णकामः प्राप्नोतीति शेषः ॥ ११ ॥

एतदिति । एवकारो व्यस्तक्रमः । एतदेव ज्ञेयं ज्ञातव्यं श्रवणादिभिर्नित्यमात्मसंस्थं सदा संनिहितम् । ज्ञेयावधिरयमित्याह–नात इति । भोक्ता भोक्तारमक्षरं भोग्यं क्षरं प्रेरितारमीश्वरं च मत्वाऽतः परं न हि किंचिद्वेदितव्यमस्तीत्यन्वयः । सर्वं प्रोक्तं नातः परं प्रवचनीयमस्तीति पृथग्वाक्यम् । सर्वमित्युक्तमभिनीय दर्शयति–त्रिविधमिति । भोक्त्रादिरूपं त्रिविधं ब्रह्म ह्येतत्प्रोक्तम् । तदुक्तं गीतासु—

' द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ' इति ॥ १२ ॥

सतोऽप्यनुलम्भे को हेतुरत आह–वह्नेर्यथेति । योनिगतस्य काष्ठादिस्थितस्य नैव च लिङ्गनाशः । विमतं काष्ठं वह्निमदुपायलभ्यवह्नित्वात् । पर्वतवदित्यादिलिङ्गसद्भावात् । उपायलभ्यतामाह–स भूय इति । स वह्निर्भूय एवे-

न्धनं मथनकाष्ठं योनिररणिकाष्ठं ताभ्यां मथिताभ्यां गृह्यो ग्राह्यः । तद्वोभयं वै देहे शरीरे प्रणवेन भवति । तदुक्तम्—आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिमित्यादि ॥ १३ ॥

तदेवाऽऽह—स्वदेहमिति । अरणिं प्रणवाधारत्वात् । उत्तरारणिं तस्य षट्चक्रभेदनेनोर्ध्वं नीतत्वात् । ध्यानमेव निर्मथनं तस्याभ्यासात्पुनः पुनः करणादेवं द्योतनावन्तमात्मानं निगूढवन्नितरां गूढमर्हति यथा तथा पश्येदित्यन्वयः॥१४॥

अदृश्योऽप्युपायैर्लभ्य इत्यत्र दृष्टान्तानाह—तिलेष्विति । स्रोतःसु भूम्याद्यन्तर्हितेषु खननादिना यथाऽऽपो गृह्यन्ते तद्वदात्माऽऽत्मनि मनसि । मनसैवानुद्रष्टव्य[1]मिति श्रुतेः । ग्रहणोपायः सत्यतपसी । योऽनुपश्यति[2] पुनः पुनश्चिन्तयाति तेन गृह्यत इत्यन्वयः ॥ १५ ॥

तस्य विशेषणानि सर्वव्यापिनमित्यादीनि । अर्पितं देहेनैक्यमापादितम् । परमुपनिषत्परं रहस्यं ब्रह्म । आत्मविद्या च तपश्च ते मूलं प्राप्त्युपायो यस्य तादृशं वेदितव्यम् । द्विरुक्तिरध्यायसमाप्त्यर्था ॥ १६ ॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
प्रथमोऽध्यायः ।

---

अथ द्वितीयोऽध्यायः ।

---

अथ योगेनाऽऽत्मदर्शनाय योगं निरूपयितुकामो मन्त्रारूढतां योगस्य दर्शयति—युञ्जान इति । आद्याऽनुष्टुप् । द्वितीया गायत्री । तृतीयाऽनुष्टुप् । चतुर्थी जगती । पञ्चमी त्रिष्टुप् । षष्ठी जगती । सवितर्षिः । सविता देवता । तदुक्तम्—अथ प्रतिकर्मदर्शिनो युञ्जानोऽष्टौ सावित्राणि सविताऽपश्यदाद्या तृतीया चानुष्टुप्चतुर्थीषष्ठ्यौ जगत्यौ द्वितीया गायत्री पञ्चमी त्रिष्टुबिति । तत्र पञ्चेह पठिताः । अग्निर्यत्रेत्याद्या अन्याः[3] सविताऽपश्यदित्युक्तम् । दर्शनाच्चर्षिः । युङ्क्ते मनः कर्मसु युञ्जानः प्रजापतिः समष्टिरूपं लिङ्गं[4] स प्रथमं मन आद्यं लिङ्गं हिरण्यगर्भाख्यम् । मनसा यन्मनो विदुरिति श्रुतेः । तत्त्वाय तस्य भावस्तत्त्वं तस्मै संकल्पविकल्पकर्तृत्वेन स्वमनस्त्वसिद्धये सविता प्रसविता जगत्कल्पको मनोरूपः समष्टिभावेन भवति । तथा धियः प्राणा[5] भवति वागादिवृत्तिरूपेण भवति । किं कृत्वाऽग्नेरात्मनो ज्योतिः प्रकाशात्मकं निचाय्य दृष्ट्वा मनसो मननशक्तिरिन्द्रियशक्तिश्चाऽऽत्मीयमेव तेज इत्यर्थः । नान्योऽ-

---

१ क. °व्य इति । २ ग. °ति पुनः पुनः पश्यति पु° । ३ घ. अन्या आत्मनि बुद्धौ स° । ४ क. ख. °तेः । स त° । क. ५ ख. प्राणो भ° ।

तोऽस्ति द्रष्टेति श्रुतेः । चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमिति च । तन्मनः पृथिव्यै विस्तीर्णप्रजाया अध्याभरदध्याहरति लेट् तिप इतश्च लोपः परस्मैपदेषु शब्गुणः । हृग्रहोर्भश्छन्दसि । अध्याङावुपसर्गौ । समष्टिमनो व्यष्टिमनोरूपेण सर्वप्रजास्वध्याहरति प्रातिस्विकमनस्तया व्यष्टिरूपेण भवति । व्याख्यातश्चैवं महाब्राह्मणे—स जुहोति युञ्जानः प्रथमं मन इति । प्रजापतिर्वै युञ्जानः स मन एतस्मै कर्मणे युङ्क्ते । तन्मन एतस्मै कर्मणे युङ्क्ते । तस्मात्प्रजापतिर्युञ्जानः । तत्त्वाय सविता धिय इति । मनो वै सविता प्राणा धियः । अग्नेर्ज्योतिर्निचाय्येति । अग्नेर्ज्योतिर्दृष्ट्वेत्येतत् । पृथिव्या अध्याभरदिति । पृथिव्यै ह्येनदध्याभरतीति ॥ १ ॥

युक्तेनेति । युक्तेन मनसा कर्मणि नियुक्तेन चेतसा वयं स्तोतारो देवस्य सवितुः सवे प्रसवे स्थिता देवेन सवित्रा हिरण्यगर्भरूपेण प्रसूताः शरीरं प्रापिता इत्यर्थः । किमर्थम् । शक्त्या स्वर्ग्याय शरीरसामर्थ्येन स्वर्गनिमित्ताय कर्मणे स्वर्गप्रयोजनकर्मसिद्ध्यर्थं तद्द्वारा सत्त्वशुद्ध्या चापवर्गसिद्ध्यर्थं प्राणिभ्यो देहं दत्तवानित्यर्थः । व्याख्यातं च शतपथब्राह्मणे—युक्तेन मनसा वयमिति । मन एवैतदेतस्मै कर्मणे युङ्क्ते न ह्ययुक्तेन मनसा किंचन संप्रति शक्नोति कर्तुम् । देवस्य सवितुः सव इति । देवेन सवित्रा प्रसूता इत्येतत् । स्वर्ग्याय शक्त्येति यथैतेन कर्मणा स्वर्गं लोकमियादेवमेतदाह शक्त्येति । शक्त्या हि स्वर्गं लोकमेतीति ॥ २ ॥



युक्त्वाय सवितेति । सविता मनो देवान्प्राणान्वागादीन्स्वर्यतः स्वर्गं दिवं द्युनामानं यतो गच्छतो धिया कर्मप्रवर्तकबुद्ध्या युक्त्वाय योजयित्वा । क्त्वो यगिति यगागमः । कीदृशान् । बृहज्ज्योतिः करिष्यतः कर्मणा सूर्याख्यं ज्योतिर्वर्धयिष्यतः । वेदरसमयत्वादादित्यमण्डलस्य तदर्थं बृहज्ज्योतिरग्न्याख्यं संस्करिष्यतः कर्मनिष्पत्तय एवंविधांस्तान्सविता मनोधिष्ठाता प्रसुवाति प्रेरयति । तदीयशक्त्यैव वागादिप्रवृत्तेः । षू प्रेरणे लेट् आट् । व्याख्यातं च—युक्त्वाय सविता देवानिति । मनो वै सविता प्राणा देवाः । स्वर्यतो धिया दिवमिति । स्वर्गं ह्येनाँल्लोकं यतो यतोधियैतस्मै कर्मणे युयुजे । बृहज्ज्योतिः करिष्यत इति । असौ वा आदित्यो बृहज्ज्योतिरेष उ एषोऽग्निरेतं वै ते संस्करिष्यन्तो भवन्ति । सविता प्रसुवाति तानिति । सवितृप्रसूता एतत्कर्माकरवन्नित्येतदिति ॥ ३ ॥

युञ्जत इति । विप्राः श्रोत्रियब्राह्मणा मनोऽन्तःकरणं युञ्जते धियः प्राणान्वागादीन्युञ्जते वेदोक्तकर्माणि प्रवर्तयन्ति । विप्रस्य वेदप्रतिपाद्ययज्ञपुरुषस्य

१ ग. घ. °य शारी° । २ ग. घ. च शात° ।

बृहतो महतो विपश्चितः सर्वदर्शिनः संबन्धिनि कर्मणि वेदोक्तकर्मणि मन इन्द्रियवृत्तीश्च ब्राह्मणाः प्रयुञ्जत इत्यर्थः । एको वयुनावित्। वयुनवित् । छान्दसो दीर्घः । ज्ञानी[1] धनी वा होत्रर्त्विजा विदधे कर्माणि विधत्ते । इदनर्थको निपातः । तेन कर्मणा किं भवतीत्याह—मही महती देवस्य सवितुर्मनोभिमानिनः परिष्टुतिः कीर्तिर्भवति । व्याख्यातं तथा—युञ्जते मन उत युञ्जते धिय इति । मनसा च वै वाचा च यज्ञं तन्वते स यदाह–युञ्जते मन इति तन्मनो युनक्त्युत युञ्जते धिय इति तद्वाचं युनक्ति धियो धिया ह्येतया मनुष्यायुष्युषन्ति। अनुक्तेनैव प्रकामोऽद्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते । विप्रा विप्रस्य बृहतो विपश्चित इति । ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्रास्तानेवैतदभ्याह । बृहतो विपश्चित[3] इति । यज्ञो वै बृहन्विपश्चिद्यज्ञमेवैतदभ्याह। वि होत्रा दधे वयुनाविदेक इदिति । वि हि होत्रा दधते यज्ञं तन्वानाः । मही देवस्य सवितुः परिष्टुतिरिति । महती देवस्य सवितुः परिष्टुतिरित्येतदिति ॥४॥

युजे वामिति । ब्रह्म प्राणाः पूर्व्यमन्नं युवां स्थः । वां युवां हे प्राणान्ने नमोभिर्नमःशब्दोपलक्षिताभिराहुतिभिर्युजे योजयामि । प्राणैराहुतिरन्नस्य हूयत इति कर्तृकर्मभावेन प्राणान्नयोराहुत्या योगः । भोजने त्वधिकरणकर्मत्वेन होमस्य किं फलमत आह—विश्लोक इति । विविधः श्लोकः कीर्तिः । श्लोको यशसि पद्ये च । एत्वागच्छतु श्लोको व्येतु विविधमेत्विति वा प्रार्थनायां लोट् स्तुतिरायात्येतदर्थं सूरेः कर्मविदः पथ्या हरीतक्यगदराज इव सा यथा हितकृदेवं यशसा स्वर्गः । हे विश्वे सर्वेऽमृतस्य प्रजापतेः पुत्रा देवाः सर्वे यूयं शृण्वन्तु । ये यूयं प्राणा दिव्यानि धामान्यातस्थुरेषु लोकेष्वित्यर्थात् । तथा च व्याख्यातम्—युजे वां ब्रह्म पूर्व्यं नमोभिरिति । प्राणा वै ब्रह्म पूर्व्यमन्नं नमस्तत्तदेवैषैवाऽऽहुतिरन्नमेतयैव तदाहुत्यैतेनान्नेन प्राणानेतस्मै कर्मणे युङ्क्ते । विश्लोक एतु पथ्येव सूरेरिति । यथोभयेषु देवमनुष्येषु कीर्तिः श्लोको यजमानस्य स्यादेवमेतदाह । शृण्वन्तु विश्वे अमृतस्य पुत्रा इति । प्रजापतिर्वा अमृतस्तस्य विश्वे देवाः पुत्राः । आ ये धामानि दिव्यानि तस्थुरिति । इमे वै लोका दिव्यानि धामानि तद्य एषु लोकेषु देवास्तानेतदाहेति । इदं कर्मपरं व्याख्यानं सत्त्वशुद्धिद्वारा कर्मणो ज्ञान उपयोग इति पूर्वापरसंगतिः । यदा युञ्जानादयः शब्दा आसनप्राणायामादिपरतया व्याख्यायन्ते तदा योगग्रन्थ-

---

१ क. ख. °नी वनी । २ ग. °या ह्ये° । ३ क. ख. °श्चितः । तेभ्यो यज्ञ° । ४ क. ख. तद्योग° ।

तया साक्षात्पूर्वापरसंगतिः। *तद्यथा योगमारुरुक्षोरविघ्नेनाऽऽदित्यमण्डलप्राप्त्यर्थमादित्यदृष्टानादित्यप्रीत्यर्थं जप्तव्यान्पञ्च मन्त्रानाह—युञ्जान इत्यादि। तत्त्वाय तत्त्वज्ञानार्थं प्रथमं सर्वेभ्यः पूर्वं मनोऽन्तःकरणं धियो बुद्धीन्द्रियाणि प्राणानिति यावत्। प्राणनिरोधाविनाभूतत्वाद्बुद्धिनिरोधस्य। योगशास्त्रे हि द्विविधो योगी युञ्जानो युक्तश्च। आद्योऽपरिपक्वयोगी मितयोगी भेददृष्टिरारम्भवानुच्यते। युक्तस्तु परिपक्वयोग्यमितयोगी वाह्यादर्शी स्वात्ममात्रनिष्ठो निष्पन्नयोगीत्युच्यते। तेन प्रथमप्रवृत्तो युञ्जानो रुन्धन्पवनं सविता सूर्यः कर्ताऽग्नेराधारचक्रमध्यवर्तित्रिकोणस्थस्य ज्योतिस्तेजो ज्वालारूपं निचाय्य वायुं प्रयोगेण पूरयित्वा प्रकटीकृत्य पृथिव्याः पादादिजानुपर्यन्तस्थाया आरभ्योत्तरोत्तरं भूतपञ्चकमध्याभरदध्याहरदधिरूर्ध्वभाव ऊर्ध्वमाहरन्नीतवान्वायुनाऽग्निं प्रदीप्य भूतोपसंहारपूर्वकं कुण्डल्या षट्चक्रभेदेन तद्द्वारा सर्वतत्त्वानि द्वादशान्तेऽनयदित्यर्थः। न लोकेति मनो धिय इत्यत्र कर्मणि षष्ठी निषिद्धा। अन्येनाप्येवं योग आस्थेयि इति भावः॥ १॥

युक्तेनेति। युक्तेन योगं प्राप्तेन मनसा वयमपि स्वर्ग्यायार्चिर्मार्गाय शक्त्याऽष्टाङ्गयोगसाधनसामर्थ्येन देवस्य सवितुः कृते सवे योगयज्ञेऽधिकृताः स्यामेति प्रार्थना॥ २॥

युक्त्वायेति। एवं कृतप्रार्थनान्देवान्धिया स्वबुद्ध्या स्वः स्वर्गमर्चिर्मार्गे यतो गच्छतो जिगमिषूनिति यावत्। तान्युक्त्वा प्रयोगं प्रसाध्य सविता योगमार्गप्रसविता सूर्यः प्रसुवाति योगोपदेशेन तन्मार्गे प्रेरयति। षू प्रेरणे। उपसंवादे लेट्। कीदृशान्दिवं स्वर्गमुद्दिश्य बृहज्ज्योतिः स्वात्मज्योतिः करिष्यतः प्रकाशयिष्यतोऽर्चिरादिमार्गेण ब्रह्मलोकं गत्वाऽऽत्मलाभमिच्छत इत्यर्थः॥३॥

ननु सूर्येणापि प्रथमं योगः कुतो लब्ध इति चेत्। जगद्गुरोः परमात्मन एवेति बोध्यम्। तदुक्तम्—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः। इति।

एवमादित्येन प्रवर्तितं योगमद्यापि ब्राह्मणा उपासत इति। योगो वृत्तिनिरोधस्तद्युक्तं कुर्वन्ति मन उतापि धियोऽपि युञ्जते विप्रा ब्राह्मणाः

* घसंज्ञितपुस्तके तद्यथेत्यादि शरीरसाध्यत्वादित्यन्तं योगपरं व्याख्यानं न विद्यते।

1 क. °त्यपराप्राप्त°।

कस्य संबन्धेन बृहतो विप्रस्य सूर्यस्य त्रिपश्चितः पण्डितस्य संबन्धेन योगं कुर्वन्ति सवितृप्रवर्तितं योगमद्यापि युञ्जत इत्यर्थः । तत्र कश्चिदेव सिद्धिं गत इत्याह—वीति । एकः कश्चिदेव विज्ञानी यथोक्तयोगज्ञानवान्वयुना वयुनानि ज्ञानानि तत्तदासनादिसमाध्यन्ताष्टाङ्गविषयाणि होत्राऽऽचार्येण विदधे । अग्निना चाऽऽधारादिचक्रभेदेन विदधे । अग्निर्वै होतेति श्रुतेः । तदित्थं मही महती देवस्य योगमार्गद्योतकस्य सवितुः सूर्यस्य परिष्टुतिः परितः सर्वजनेषु स्तुतिरासीत् ॥ ४ ॥

इदानीं सूर्यप्रवर्तितं देवैः साधितं योगं स्तोताऽपि प्रार्थयते—युज इति । हे बुद्धिमनसी वां युवयोः संबन्धि ब्रह्म वेदार्थं योगमार्गं ब्रह्मप्राप्तिसाधनत्वाद्वा ब्रह्म तन्नमोभिः प्रणिपातैः साधनैः । यस्य देवे परा भक्तिरित्यादिश्रुतेः । तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवयेतिस्मृतेश्च । युजे योजयामीति मनःप्राणदेवतयोः प्रार्थना । कीदृशं ब्रह्म पूर्व्यं पूर्वैः सवित्रादिभिः कृतम् । छन्दसीति वर्तमाने पूर्वैः कृतमिनयौ चेति पूर्वशब्दाद्यप्रत्ययः । सूरेर्योगविदो मम पथ्येवास्मिन्योगमार्ग आस्थित एव श्लोकः कीर्तिर्व्येतु विविधैतु । इमां मत्प्रार्थनां शृण्वन्तु विश्वे सर्वेऽमृतस्य ब्रह्मणः पुत्राः । के ते ये दिव्यानि धामान्यमरावत्यादीन्यातस्थुर्योगसिद्धिमासाद्य प्राप्ताः । श्रुत्वा च ममाप्यविघ्नेन सिद्धिं दिशन्त्विति भावः । इदं मन्त्रपञ्चकं जपित्वा योगमास्थितस्य मान्त्रलिङ्गिकी सिद्धिर्भवति । सूर्यस्तुतित्वात्सूर्यप्रसादेन सूर्यमण्डलं च भिनत्ति ॥ ५ ॥

अस्य योगस्य शरीरसाध्यत्वा*च्छरीरोत्पत्तिप्रकारमाह—अग्निरिति । अग्निस्तेजः पुरुषांशो यत्र देशे गर्भाशये लक्षणे काले चाभिमथ्यते वातपित्तकफैर्मिश्रितो भवति । वायुर्यत्राधिरुध्यतेऽधिरूर्ध्वभावेऽङ्कुरानुकूलो भवति । सोमः स्त्रीभागो यत्रातिरिच्यते गर्भोचिताल्लोहितादुपचयार्थमधिको भवति । तत्र संघाते मनः संजायते ब्रह्मशक्तिः[1] समष्टिरूपा[2] व्यष्टिरूपेणाऽऽविर्भवति गर्भात्मकसंघाते चलनवलनादि जायत इत्यर्थः ॥ ६ ॥

सवितेति । एषा निचृदनुष्टुप् । सविता मनः प्रसवेन दशमे मासि सूत्या युषेत जुषेत सेवेत ब्रह्म प्राणान्वागादिवृत्तीः पूर्व्यमन्नं पयःप्रभृति युषेत । जुषी प्रीतिसेवनयोः । व्यत्ययेन यकार आदेः । युष वध इत्यस्य त्वर्थोऽसंगतः स्यात्प्रकृते । अनेकार्थत्वेन भक्षार्थतया वा निर्वाहः । यत्र योनिं कृणवसे

---

* दशमपृष्ठस्थटिप्पणी द्रष्टव्या ।

---

१ ग. घ. °शक्तेः स° । २ ग. घ. °पाया व्य° । ३ क. ख. °णास्त्वगा° ।

यत्रोत्पत्तिं करोति ब्राह्मणयोनौ वा क्षत्रिययोनौ वा वैश्ययोनौ वा श्वयोनौ सूकरयोनौ वा चण्डालयोनौ वा कृणवस इति लिङर्थे लेट् करोतेर्विकरणपुरुषव्यत्ययः शबपि । ननु ब्रह्म पूर्व्यं युषेतेत्युक्तं तदन्नं कुतो लभ्यमदृष्टवशादिति चेत्तददृष्टं कुत इदानीमेवोत्पन्नत्वाद्देहस्य । जन्मान्तरीयमिति चेत्तत्कालेन नष्टं भविष्यतीत्यत आह—न हि ते पूर्तमक्षिपदिति । पूर्तं वाप्यादिकर्मफलं तच्च शुभाशुभयोरुपलक्षणं तच्छुभाशुभं कर्म हि यस्मान्नाक्षिपन्न त्यक्तवान्सविता । न हि कालेन भोगं विना कर्मणः क्षयः संभवति ।

कृतकर्मक्षयो नास्ति कोटिकल्पशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ इति स्मृतेः ॥ ७ ॥

इदानीं लब्धशरीरस्याऽऽत्मज्ञानार्थं योगसाधनान्याह—त्रिरुन्नतमिति । शिरसि ग्रीवायां हृदि चोन्नतं स्थाप्य स्थापयित्वा सुजर्थो न विवक्षितः । यद्वा त्रिस्त्रिवारं प्रातर्मध्याह्नसायंकालेषून्नतं न सुप्तं समं दण्डाकारं हृदि हृत्कमल इन्द्रियाणि चक्षुरादीनि वागादीनि च मनसाऽन्तःकरणेन संनिवेश्य निधाय ब्रह्मैवोडुपं तेन प्रतरेतोत्तरेद्विद्वान्पण्डितः स्रोतांस्याशानिर्मितानि वासनारूपाणि भयावहानि पतनहेतुत्वात् । उक्तं च—

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥इत्यादि॥८॥

प्राणानिति । प्रपीड्याऽऽयम्येह कर्मभूमौ सोऽधिकारी युक्तचेष्टः । तदुक्तम्—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ इति ।

क्षीणे प्राण आयामैस्तनूकृते नासिकया मन्दमारुतयोर्ध्वं श्वसीत ध्यानावसरे श्वासं निक्षिपेत् । दुष्टैरश्वैर्युक्तं वाहं रथमिवैनं प्राणं धारयेत स्थिरी कुर्यादप्रमत्तः सावधानः प्राणधारणानन्तरं मनश्च धारयेत प्राणस्थैर्याधीनत्वान्मनःस्थैर्यस्य ॥ ९ ॥

योगसाधनोचितं देशमाह—सम इति । समे विषमे पातसंभवात् । शुचावशुचौ मनोनैर्मल्यासंभवात् । शर्कराः सूक्ष्मपाषाणास्तद्वर्जिते तद्वति देशे शरीरे क्षतसंभवात् । वह्निमति वह्नौ पातशङ्कातः । वालुका सूक्ष्मधूलिस्तद्वति वायुव-

१ ख. °नार्थयो° । २ क. ख. °चितदे° ।

शेन वालुकाभिः शरीराच्छादनसंभवात्तैरपि विवर्जिते शब्देन जलाश्रयादि-भिश्च विवर्जित इति शेषः । शब्दवति वैयग्र्यापातात् । जलसंनिधौ तत्र पातसं-भवात् । मनोनुकूले मनःप्रीतिकारिणि न तु चक्षुपीडने चक्षुष्पीडाकरे तु न प्रयोजयेत् । चक्षुशब्दोऽयमुकारान्तच्छान्दसो वर्णलोपो वा । निवाताश्रयेण वाताभावो निवातं तदाश्रयेण गुहां योगकंदरीं प्रयोजयेत् । उक्तं चाऽऽत्मा-रामेण—

सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे ।
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना ॥ इति ।

गुहालक्षणं च तेनैवोक्तम्—

अल्पद्वारमरन्ध्रगर्तपिटकं नात्युच्चनीचायतं
सम्यग्गोमयसान्द्रलिप्तविमलं निःशेषजन्तूज्झितम् ।
बाह्ये मण्डपवेदिकूपरुचिरं प्राकारसंवेष्टितं
प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः ॥ इति ।

वर्ज्यानि च—

अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसङ्गश्च लौल्यं च षड्भिर्योगो विनश्यति ॥ इति ।

साधकानि चोक्तानि—

उत्साहात्साहसाद्धैर्यात्तत्त्वज्ञानाच्च निश्चयात् ।
जनसङ्गपरित्यागात्षड्भिर्योगः प्रसिध्यति ॥ १० ॥ इति ।

यमनियमवताऽऽसनजयपूर्वकं प्राणायामैः केवलकुम्भकपर्यन्तं प्राणे जितेऽ-ङ्गुष्ठादिद्वादशान्तपर्यन्तं मनःप्राणयोर्धारणायामभ्यस्यमानायां सर्वेन्द्रियवृत्तीनां मनसि प्रत्याहृतत्वात्तत्रानेकेऽर्थाः स्फुरन्ति । तत्र येषां ब्रह्मप्राप्तिर्भाविनी तेषां चिह्नान्याह—नीहारेति । यदैकाग्रदृष्टिनिधानेऽग्रे नीहारो हिममिव भाति । अर्कः सूर्यकिरणा इवानलोऽग्निरनिलो वायुः । यद्यपि स पुरःसरो न दृश्यते तथाऽपि तदाहतपल्लवानीव दृश्यन्ते । खद्योतः खे द्योतते परिभ्रम-न्क्षुद्रः कीटविशेषः । शशिनामिति युक्तः पाठः । छान्दसो वा मध्यदीर्घः । पुरःसराणि दृष्टिविषयाणि ब्रह्मणि ब्रह्मविषयेऽभिव्यक्तिः साक्षात्कारस्तस्य सूचकानि । अर्थात्स्त्रीपुत्रादिभाने नाभिव्यक्तिरिति ज्ञेयम् ॥ ११ ॥

पादादिजानुपर्यन्तभूमण्डले लंबीजेन चतुर्मुखं ध्यात्वा धारणायां जितायां जान्वादिपाय्वन्तं जलमण्डले वंबीजेन विष्णुं ध्यात्वा धारणायां जितायां पाय्वादिहृदयान्ते वह्निमण्डले रंबीजेन रुद्रं ध्यात्वा तेजोधारणायां जितायां हृन्मध्यादिभ्रूमध्यान्ते वायुमण्डले यंबीजेनेश्वरं ध्यात्वा वायुधारणायां जितायां भ्रूमध्यादिमूर्धान्तमाकाशमण्डले हंबीजेन सदाशिवं ध्यात्वाऽऽकाशधारणायां जितायां पृथिव्यादीनि जलादावाकाशान्तमुपसंहरेत् । तेन पञ्चानामपि स्वेन सह सदाशिव ऐक्यं भवति । ततो न रोगादिभयमित्याह—पृथ्व्यप्तेजोनिलख इति । समुत्थितेऽतिक्रान्ते ध्यानेन जित्वा युक्ते सति । स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः । पञ्चभूतधारणास्तु स्थानवर्णमण्डलोदयादिसहिता योगयाज्ञवल्क्य उक्तास्तत एवावधार्याः । पञ्चात्मके पञ्चभूतैक्यात्मके योगगुणे सबीजयोगफले प्रवृत्तेऽभ्यासेन स्थिरीभूतलक्ष्यावस्थाने । पृथ्व्यादिभूतधारणाजये फलमाह—न तस्येति । न मृत्युरिच्छां विना योगाग्निमयं योगतेजोमयं देहं लब्धवतः । तत्तद्भूतविरोधे देहविघातायोपस्थिते तत्तद्भूतधारणया तत्तदात्मको भूत्वा तत्तद्भूतविरोधं परिहरेदिति भावः ॥ १२ ॥

प्रथमयोगप्रवृत्तेश्चिह्नानि दर्शयति—लघुत्वमित्यादि। सप्तविधामाद्यां योगसिद्धिं वदन्तीत्यर्थः । पञ्चसु द्वितीयान्तेषु प्राप्नोतीति शेषः । द्वयोर्भवतीति । * इयं चतसृषु योगावस्थास्वारम्भाख्या प्रथमाऽवस्था । यथोक्तम्—

आरम्भश्च घटश्चैव तथा परिचयोऽपि च ।
निष्पत्तिः सर्वयोगेषु योगावस्था भवन्ति ताः ॥ इति ॥ १३ ॥

घटावस्था तु—

द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः ।
दृढासनो भवेद्योगी ज्ञानी देवसमस्तदा ॥

इति लक्षिता तामुत्तरां सिद्धिमाह—यथैवेति । तमात्मतत्त्वं तदात्मवस्तु प्रसमीक्ष्य प्रकर्षेण समीक्ष्य साक्षात्कृत्य देही जीव एकः परमात्मनैक्यमापन्नोऽत एव वीतशोकः । तरति शोकमात्मविदिति श्रुतेः । निःशोकः सन्कृतार्थः कृतकृत्यो भवते भवति । यद्वा । एकः कश्चिदेव न सर्वः । आश्चर्यवत्पश्यति कश्चिदेनमिति स्मृतेः । तत्किं यत्तेजोमयं भ्राजते प्रकाशा-

---

* घसंज्ञितपुस्तक इयमित्यादिर्लक्षिता तामित्यन्तो ग्रन्थो न विद्यते ।

१ ग. घ. °र्यन्ते भू° । २ घ. °त्वा भूधा° । ३ क. ख. °शिवैक्यं । ४ क. ख. °सनैर्भवे° ।

त्मकं भाति । तत्र दृष्टान्तः— सुध्मातमत्यन्ताग्नितप्तम् । तेजोमयं सुवर्णादिस्वरूपम् । मृदया मृत्तिकया ज्ञानस्थानीययोपलिप्तं विम्बं सुवर्णादिशकलमिव तद्वत्सतत्त्वमिति पाठे तद्वदिति पूर्वेण संबध्यते सतत्त्वशब्दस्तत्त्वपर्यायः । तत्त्वे चाऽऽत्मन एव प्रकरणात् । अयमात्मसाक्षात्कारो ध्यानसमाध्योः फलमिति द्रष्टव्यम् ॥ १४ ॥

* तृतीयायां ततो भूत्वा सिंहस्येव महाध्वनिः ।
महाशून्यं तदा भाति सर्वसिद्धिसमाश्रयम् ॥

इति लक्षितां परिचयावस्थामाह— यदेति । ब्रह्मतत्त्वमात्मतत्त्वेन पश्येच्छिष्यमिव पुत्रेण । एकतया पश्येदित्यर्थः । युक्तो योगं प्राप्तः । अजमनादि ध्रुवमेकरूपं सर्वतत्त्वैर्विशुद्धमसङ्गत्वात्तैरस्पृष्टमिति यावत् । एवंरूपं देवं ज्ञात्वा सर्वपाशैर्मुच्यतेऽसङ्गो भवतीत्यर्थः ॥ १५ ॥

\+ निष्पत्तौ वैणवः शब्दो वांशिकध्वनिवद्भवेत् ॥
एकीभूतं तदा चित्तं राजयोगाभिधानकम् ।
सृष्टिसंहारकर्ताऽसौ योगीश्वरसमो भवेत् ।
अस्तु वा माऽस्तु वा मुक्तिरत्रैवाखण्डितं महत् ॥
लयामृतमयं सौख्यं राजयोगादवाप्यते ।

इति लक्षितां निष्पत्त्यवस्थामाह— एषोऽहेति । एषोऽह देवः सर्वा दिशोऽनुप्रवर्तते । अपेक्षितक्रियः प्रशब्दः । अनुर्लक्षणे कर्मप्रवचनीयस्तद्योगे दिश इति द्वितीया । पूर्वो जातो हिरण्यगर्भः स एव स उ स एव गर्भे गर्भाशयेऽन्तःप्रविष्टः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । समष्टिव्यष्टिरूपेण स एव स्थित इत्यर्थः । भूतो भव्यश्च स एवेत्याह— स एवेति । प्रत्यङ् । अहमित्यात्मभावेन प्रतीयमानः । हे जना इति ऋषीणां वचः । सर्वतोमुखः सर्वत्र संमुखः ॥ १६ ॥

किं बहुना सर्वत्र स्थावरजङ्गमेषु शक्तिरेतदीयैवेत्युपसंहरति—यो देव इति।
फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥

---

* घ इति संज्ञितपुस्तके तृतीयायामित्यादि परिचयावस्थामाहेत्यन्तं शब्दजातं न विद्यते ।
\+ घसंज्ञितपुस्तके निष्पत्तावित्यादि निष्पत्त्यवस्थामाहेत्यन्तं शब्दजातं नास्ति ।

---

१ घ. सुधान्तम° । २ क. °द्दिमयं । ३ ग. भावि स° । ४ क. ख. वैष्णवः । ५ घ. °त्र मु° ।

नमोनम इति निपातसमुदायो नम इत्यर्थे वर्तते । * ईश्वरसमत्वान्मुक्तस्यापीयमेवावस्था । ननु ज्ञाननिष्ठयैव कार्तार्थ्ये सिद्धे किमष्टाङ्गेन योगेन । मैवम् । योगस्य मनआदिजयार्थत्वादजितेन्द्रियाणां ज्ञानानुदयात् । तदुक्तम्—

हठं विना राजयोगो राजयोगं विना हठः ।
न सिध्यति द्वयं तस्मादानिष्पत्तेः समभ्यसेत् इति ॥ १७ ॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

---

श्रीजगद्गुरुं परमात्मरूपं सदाशिवं तृतीये स्वरूपतो महिमतश्च ध्यानलक्ष्यसिद्धये निरूपयति–य एक इति। जालमानायो जालमिव जालं माया तद्वान्। यद्वा जालं समूहस्तद्वान्। एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुनरित्यादिश्रुतेः। जालं गवाक्ष आनाये कोरके दम्भवृन्दयोः। जालो नीपद्रुमे जाली कोशातक्यामुदाहृतेति विश्वः। ईशत ईष्टे बहुलं छन्दसीति लुगभावः। ईशनीभिः। ईश्यत आभिरितीशन्यः करणाधिकरणयोश्चेति ल्युट् टित्वान्ङीप्। ईशन्य ईशशक्तयो ज्ञानशक्तयः क्रियाशक्तयश्च यद्यप्येकैव परमा शक्तिः। अजामेकामिति श्रुतेः। एकैवाहं जगत्यत्र द्वितीया का ममापरेति स्मृतेश्च। तथाऽपि कार्यभेदान्नानात्वं द्रष्टव्यम्। एकोऽपि स्वशक्तिभिः सर्वजगद्रूपो भवतीत्यर्थः। सर्वानिति। स्वशक्तिभिरेव स्वकृतान्सर्वाँल्लोकान्स्वायत्ती करोतीत्यर्थः। उद्भवे भवोद्वृत्तौ वस्तुलये संभवे वस्तूत्पत्तौ च य एवैको निमित्तमुपादानं च यद्वा जगत उद्भव उत्पत्तौ संभवे लयदशायामाधारानतिरिक्तत्वे चैक एवावशिष्यते। संभवः कथितो हेतावुत्पत्तौ मेलकेऽपि च। आधारानतिरिक्तत्व आधेयस्य च संभव इति विश्वः। आदावन्ते च यत्सत्यं मध्येऽपि तदेव सत्यं यथा सर्पे रज्जुरिति व्याप्त्या स एवैकः सत्य इत्यर्थः। य एतद्विदुः। एतद्वृत्तान्तं जानन्ति तेऽमृता मुक्ता भवन्ति ॥ १ ॥

एको हि यस्माद्रुद्रो वर्तते न द्वितीयाय द्वितीयार्थं न तस्थुर्द्वितीयमुखावलोकिनो नाभूवन्। के य इमाँल्लोकानीशत ऐश्वर्येण व्याप्नुवन्ति ब्रह्मेन्द्राद्या-

---

* घसंज्ञितपुस्तक ईश्वरेत्यादि समभ्यसेदित्यन्तं शब्दजातं नास्ति ।

---

१ क. °यं यस्मा° । २ क. °रेत्यादिस्मृ° । ३ ग. घ. °यत्तान्क° ।

स्ते रुद्रमेवैकं प्रभुत्वेनामन्यन्त, इत्यर्थः । एको रुद्रो न द्वितीयाय तस्थावित्यथर्वशिखायां पाठः । हे जनाः स प्रत्यङ्प्रतिशरीरमात्मरूपेण तिष्ठति । संचुकोच संकोचं कृतवानन्तकाले मरणप्रलयादौ । ननु संकोचस्तटस्थेनासंबद्धस्य जगतः कथं स्यादत उक्तं संसृज्येति । संसर्गं संबन्धमध्यासलक्षणं प्राप्य स्वाध्यस्त इच्छानिर्मिते संकोचविकासौ सुकराविति भावः । विश्वा भुवनानि सर्वाणि भुवनानि संसृज्येत्यन्वयः । कथंभूतः । गोपा गाः पाति गोपालतुल्यो लोकरक्षक इत्यर्थः । सृष्टिस्थितिसंहाराणां कर्तेति यावत् ॥ २ ॥

नन्वेकः कथं बहून्नियच्छेदित्याशङ्क्याऽऽह–विश्वत इति । विश्वतस्पात् । विश्वतः सर्वतः पादा यस्य । पादस्य लोपोऽहस्त्यादिभ्यः । बाहुभ्यां विद्याकर्मभ्यां संधमति पतत्रैर्वासनारूपैः संधमति दीपयति जीवनिष्ठविद्याकर्मवासनादिभिरिश्वरो जगत्प्रवर्तयतीत्यर्थः । तमेतं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतेः । दिवं सत्कर्मणा जनयन्भूमिं मिश्रकर्मणा भूमिप्रदेशविशेषान्नरकान्पापकर्मणा जनयंस्तज्जनने प्रयोजको भवन्देवो द्योतनस्वभाव एकोऽद्वितीयः । वस्तुतस्तु स्वेच्छातिरिक्तस्यादृष्टस्याभावात्पूर्वोत्तरतटस्थानीये द्यावाभूमी रचयित्वा कर्णधार इव ज्ञानक्रियाशक्तिभ्यां बाहुभ्यां पतत्रैः स्वलीलाविशेषैरेव प्रवर्तयति सर्वम् ॥ ३ ॥

नन्वन्येष्वपि देवेषु सत्सु कथमेको रुद्र एव श्रूयतेऽत आह–यो देवानामिति । प्रभव उत्पत्तिस्थानमुद्भव ऐश्वर्यप्रदः संहर्ता वा विश्वाधिको विश्वेभ्योऽधिको महर्षिर्महाद्रष्टा । तत्र प्रथमं जन्यं देवमाह—हिरण्यगर्भमिति । यस्य ब्रह्माण्डं शरीरं यद्गर्भो विराट्पुरुषो ब्रह्माण्डं चापञ्चीकृतपञ्चभूतारब्धम् । स रुद्रो नोऽस्मान्संयुनक्तु संयोजयतु पितेव पुत्रम् ॥ ४ ॥

पापकाशिनी पापनाशिका तनुवा तन्वा शरीरेण शंतमयाऽतिशयेन सुखरूपया हे गिरिशंत गिरिणा शंतो गिरिशंतः शं सुखं तदस्यास्तीति शंतः । कंशंभ्यां बभयुस्तितुतयस इति मत्वर्थे तः प्रत्ययः । अभिचाकशीहि दीप्यस्व ॥ ५ ॥

इषुः स्त्रियाम् । अस्तवे । असु क्षेपणे तुमर्थे तवेन् । हे गिरित्र पुरुषमस्मदीयपरिवारं मा हिंसीः किं बहुना जगदपि मा हिंसीः ॥ ६ ॥

ईश्वरस्वरूपं निर्णीयाऽऽशिषः प्रार्थ्य च योगपूर्वकाराधनस्य फलमाह—तत इति । ततः परं योगे सिद्ध उपासनायां च सिद्धायां ब्रह्म परं परं ब्रह्म

---

१ क. ख. °त्वेन म° । २ क. ख. गोप्ता गाः । ३ ग. घ. °वान्नौ पूर्वो° । ४ घ. °प्रदोऽत्र भवत्यैश्वर्ये सं° ।

तमीशं ज्ञात्वाऽमृता भवन्तीत्यन्वयः । ब्रह्मत्वं कुत इत्यत उक्तं बृहन्तामिति । बृहि वृद्धौ शता । यथा यथार्थभूतं निकायं परमात्मानम् ।

निकायो निलये लक्ष्ये संहतानां समुच्चये ।
एकार्थभाजि निवहे परमात्मनि चेष्यते ॥ इति विश्वः ।

परिवेष्टितारं रक्षकत्वाद्दुर्गस्थानीयम् ॥ ७ ॥

वेदाहमिति । ऋषेर्वचोऽहमेतं पुरुषं वेद तमसः परस्तान्मायातीतं तं विदित्वा मृत्युमत्येत्येव । नान्य इति ब्रह्मवेदनव्यतिरिक्तो यः पन्थास्तत्तत्तीर्थस्नानमहादानादिलक्षणो नास्ति परम्परया कारणत्वात्तेषाम् ॥ ८ ॥

यस्मादिति । परमप्यपरमपि नास्त्येकत्वाद्ब्रह्मणः । न ज्यायोऽस्ति किंचिदिति पाठः । स्तब्धो दृढासनो दिवि स्वर्ग एकः प्रधानीभूतस्तिष्ठति कैलासवासित्वात्तेन देवेन ब्रह्मरूपतयेदं सर्वं पूर्णम् ॥ ९ ॥

ब्रह्मण एवातिशयमाह—तत इति । ततो मूर्ताद्ब्रह्मणो यदुत्तरमतिशयेन तदरूपं शुक्लादिरूपरहितमनामयं निर्विकारम् ॥ १० ॥

ब्रह्मोत्कर्षमुक्त्वा शिवस्य ब्रह्मानतिरेकमाह— सर्वेति । सर्वत एवाऽऽननशिरोग्रीवं यस्य गुहा हृदयपुण्डरीकम् ॥ ११ ॥

सत्त्वस्य प्राणिजातस्यान्तःकरणस्य वा सत्त्वगुणस्य वा प्रवर्तको नियन्ता सुनिर्मलामिमां शान्तिमाश्रित इति शेषः ॥ १२ ॥

अङ्गुष्ठमात्र इति । अङ्गुष्ठपरिमाणहृदयपुण्डरीकच्छिद्रवर्त्यङ्गुष्ठमात्रो लिङ्गाभिमानी । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति लिङ्गात् । हृदा[3] हृत्स्थया बुद्ध्या मनस ईष्टे मनीट् तया संकल्पवर्जितया मनीषा बुद्ध्या मनसा[4] मननरूपेण सम्यग्दर्शनेनाभिक्लृप्तो ज्ञातः । य एतद्विदुर्याथार्थ्येन ते मुक्ता भवन्ति ॥ १३ ॥

वृत्वा व्याप्य ततोऽधिकं दशाङ्गुलमवधिमतिक्रम्यातिष्ठत् । व्याप्तिपरमेतत् । व्याप्याद्भूम्यादेराधिकोऽयमित्यर्थः ॥ १४ ॥

उतापि । अमृतत्वस्य मोक्षस्येशानः प्रभुस्तत्प्रदत्वात् । यो मोक्षस्यापि प्रभुस्तस्यान्यप्रभुत्वे किं वक्तव्यम् । कस्यामृतत्वस्य प्रभुः किं स्वर्गाद्यमृतत्वस्य नेत्याह—यदिति । यदमृतत्वमन्येनेतरेण सह विवक्षायामतिरोहति । अतिशयेनोर्ध्वं भवति । देवाद्यमृतत्वमधिकमिदं वेत्यन्येन सह विवक्षायां तदतिक्रम्य यद्रोहत्यूर्ध्वं भवति ॥ १५ ॥

---

१ क. ख. नियमे ल° । २ क. °णत्वं तेषा° । ३ घ. °दा चित्तेन मनीषा । ४ घ. °सा संकल्पकर्ताऽभिक्लृप्तोऽङ्गुष्ठमात्रतया मतो न वस्तुतस्तथा । य° ।

सर्वेन्द्रियव्यापारानतिरोहितक्रियाशक्तिचिद्रूपतया सर्वदा करोतीत्याह—सर्वतःपाणिपादमिति ॥ १६ ॥

सर्वेति । गुणा विषयास्तत्प्रकाशकम् । तर्हि किं सेन्द्रियं नेत्याह—सर्वैरिन्द्रियैर्विवर्जितम् । शरणं रक्षितृ । शरणं गृहरक्षित्रोः । सुहृन्मित्रम् ॥ १७ ॥

नवेति । पुरे शरीरे लेलायते बहिर्बाह्येऽर्थे लीलां करोति ध्यायतीव लेलायतीवेति श्रुतेः पराञ्चि खान्यतृणत्स्वयंभूरिति च । वशी सर्वो वशवर्त्यस्यास्ति ॥ १८ ॥

विरोधालंकारेण स्वरूपमाह—अपाणिपाद इति । जवनो जु रंहसि जुचङ्क्रम्येति युच् । यः पादरहितः स कथं वेगवान्विभुत्वेन सर्वत्रोपलम्भादिति परिहारः । अपाणिरपि ग्रहीताऽऽदाता । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तं महान्तं पुरुषमाहुः ॥ १९ ॥

अणोः श्यामाकादेरणुतरो महतः पृथिव्यादेर्महत्तरः । यदस्ति लोके वस्तु तत्तेनैवाऽऽत्मना नित्येनाऽऽत्मवत्संभवति तदात्मना विनिर्मुक्तमसत्संपद्यते । तस्मादसावेवाऽऽत्माऽणोरणीयान्महतो महीयान्सर्वनामरूपवद्वस्तूपाधिकत्वात् । जन्तोर्ब्रह्मादिस्तम्बपर्यन्तस्य गुहायां हृदये निहित आत्मभूतः स्थितः । अक्रतुमसंकल्पम् । अक्रतुरितिपाठेऽधिकारिविशेषणम् । धातुरात्मनो गुरोर्वा प्रसादान्महिमानं महान्तम् । भूमेतिवद्भावार्थो न विवक्षितः । धातुप्रसादादितिपाठे दधत्यर्थानिति धातव इन्द्रियाणि तेषां प्रसादान्नैर्मल्यात्सत्त्वशुद्धेरित्यर्थः ॥ २० ॥

वेदाहमित्यृषेर्वाक्यम् । अजरमप्राकृतं देवमिति यावत् । पुराणं पुराऽपि नवम् । सर्वं वस्तु प्राप्तं कुतो विभुत्वाद्देशतः कालतो वस्तुतश्च व्यापकत्वात्परिच्छेदरहितत्वाज्जन्म निरोधं न प्रवदन्ति यस्येति युक्तः पाठः । यद्वा यस्य जन्मोत्पत्तिं निरोधं मरणं च प्रवदन्ति प्रथममज्ञानदशायां वदन्ति मूढा इत्यर्थात् । तर्हि ज्ञानदशायां किमत आह—ब्रह्मवादिन इति । वेदविदो हि निश्चितमसंदिग्धं नित्यं प्रवदन्ति प्रसिद्धं वदन्ति वेदे वाक्यशतेन नित्यत्वप्रतिपादनात् ॥ २१ ॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
तृतीयोऽध्यायः ॥ ३ ॥

=====

१ घ. °दस्मिँल्लोके ।

अथ चतुर्थोऽध्यायः ।

ॐकारादिसृष्टिक्रमेण तस्य सर्वात्मकतामुपपादयति—य एक इति । य एक एव सन्वर्ण ओंकाररूपतां गतः । वर्णकस्तुतिविस्तारे शुक्लाद्यत्युक्तिदीपने । पचाद्यच् । वर्णयत्यात्मस्वरूपं वर्ण ॐकारः । वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोक्षरे । विलेपने कुथायां च वर्णः स्याद्गुणभेदयोः ॥ इति विश्वः । वर्णरूपः सञ्शक्तियोगात्सामर्थ्यादनेकान्वर्णानकारादीन्निहितार्थान्समर्पितार्थान्पदवाक्यरूपेण दधाति धारयति । निहितार्थ इति पाठे शक्यत्वेन समर्पितोऽर्थो येन सः । शब्दशक्तिरपीश्वरेच्छारूपैव । शब्दसृष्टिमुक्त्वाऽर्थसृष्टिमाह—विचैतीति । आदौ च विश्वं विश्वरूपः सन्नन्ते चावसाने व्येति व्ययं विनाशं गच्छति कार्यरूपं जहातीत्यर्थः । स देवो दीप्तिमाञ्श्वसनः प्राणोपाधिजीवनामा बुद्ध्या ज्ञानेन शुभया स्वर्गापवर्गसाधन्या संयुनक्तु संयोजयतु । स देवश्च स न इति पाठे वाक्यद्वयम् । नन्वन्ते व्ययमेति चेत्समूलं नश्येतेत्यत उक्तं स देवश्चेति । च एवार्थे देव एव द्योतनधर्मा व्ययधर्मेणास्पृष्ट इत्यर्थः । स पूर्वोक्तः परमात्मा नोऽस्मान्बुद्ध्याऽऽत्मविषयया संयुनक्तु संयोजयतु प्रार्थनायां लोट् ॥ १ ॥

तस्य विश्वरूपतां दर्शयति—तदेवेति । शुक्रं वीर्यं ब्रह्म वेदः ॥ २ ॥

स्त्रीपुरुषादिभेदोऽप्यात्मनि कल्पित इत्याह—त्वं स्त्रीति । जीर्णः पुराणो दण्डेन वञ्चसि दमेन दुष्टांश्छलयसि जातो भवसि कार्यजातं त्वमेवेत्यर्थः ॥३॥

पतङ्गो रक्तवर्णः । लोहिताक्षोऽग्निः । तडिद्गर्भो मेघः । सत्त्वं सत्त्वाख्यो गुणः । विश्वा सर्वाणि ॥ ४ ॥

अजां मायां लोहितेति गुणत्रयमयीं सरूपास्त्रिगुणाः । अजो ह्येकः संसारी जुषमाणः प्रीयमाणोऽनुसृत्य शेते स्वस्थतां मन्यते । अजोऽन्यो विरक्तो विमुक्तः परमात्मा त्वेकरूप एव न भोगान्भुङ्क्ते नापि जहाति ॥ ५ ॥

द्वा द्वौ सुपर्णा सुपर्णौ पक्षितुल्यौ चेतनत्वाज्जीवपरमात्मानौ । सयुजा सदा संयुक्तौ । सखाया सखायौ परस्परमित्रे सयुजावपि गुरुभार्गवौ न सखायौ । राहुरव्योः परं वैरं गुरुभार्गवयोरपीति स्मरणात् । सखायावपि शिवकेशवौ न सयुजावित्युभयोपादानम् । समानमेकम् । वृक्षम् । ओव्रश्चू छेदने छेदनधर्माणं शरीरं परिषस्वजाते ष्वञ्ज परिष्वङ्गे छन्दसि लिडिति भूतसामान्ये लिट् । सदि

स्वञ्ज्योः परस्य लिटीति परस्य षत्वनिषेधः । अन्यो जीवः पिप्पलं शरीरवृक्षोत्थं फलं कर्माख्यं स्वादु सरसं यथा भवत्येवमत्ति भुङ्क्ते । अनश्नन्नभुञ्जान एवान्यो अभिचाकशीति परमात्मा भृशं प्रकाशत एव न त्वत्ति । काशृ दीप्तौ यङ्लुकि लट् ॥ ६ ॥

समान उभयसाधारणे पुरुषो जीवो निमग्नस्तादात्म्यमापन्नोऽनीशयाऽनीशतया मुह्यमानो विषये[1] रज्यमानो जुष्टं सेवितं सेवया[2] प्रसन्नं[3] सन्तमस्येशस्य[4] महिमानं च पश्यति । इत्येवं पश्यन्सर्वत्र वीतशोको भवति ॥ ७ ॥

ऋचो अक्षरे । ऋक्प्रतिपाद्येऽक्षरे नित्ये परमे व्योमन्ब्रह्माख्ये विश्वे देवा यस्मिन्नधिनिषेदुर्यत्स्वामिकाः[7] स्थिताः । यस्य चेश्वरवचनमिति स्वामिनः सप्तमी । ऋचा वेदाध्यापनमात्रेण[5] । य इदनर्थकस्तद्विदुस्त इमे समासते सम्यगासते मुक्ता भवन्ति ॥ ८ ॥

छन्दांसि गायत्र्यादीनि । यज्ञाः[6] पाकसंस्था असोमकाः । क्रतवः ससोमकाः । व्रतानि ब्रह्मचर्यादीनि । भूतमतीतशब्दवाच्यम् । भव्यं भाविशब्दवाच्यम् । यच्चान्यदपि वेदा वदन्ति वेदप्रतिपाद्यं पश्वादि । अस्मान्वेदाध्येतॄनृषीन् । मायी मायावानीश्वर एतद्विश्वं च सृजते तस्मिंश्च विश्वस्मिन्नन्यो जीवो मायया संनिरुद्धः सम्यङ्निरुद्धः ॥ ९ ॥

अस्य महेश्वरस्यावयवभूतैरवयवत्वं प्राप्तैर्जीवैस्तु सर्वमिदं जगद्व्याप्तमवयवत्वमुपचारात् ॥ १० ॥

योनिं कारणं सर्वमेक एवेश्वरोऽधितिष्ठति सर्वस्येश्वरत एव ज्ञानक्रियाशक्त्योर्लाभात् । सं च वि चैति समेति संगच्छते व्येति व्ययं गच्छति प्रलये । निचाय्य दृष्ट्वेमां निरूप्यमाणामत्यन्तं शान्तिं मोक्षाख्यामेति याति ॥ ११ ॥

प्रभव उत्पत्तिस्थानम् । उद्भवो वैभवप्रदः । स एव रुद्रः स एव महर्षिर्भृग्वादिः प्रथमं जायमानं हिरण्यगर्भमपि तमेव पश्यत जानीत संयुनक्तु संयोजयतु ॥ १२ ॥

यस्मिन्नधि लोकाः श्रिताः । ईश ईष्टे । कस्मै ब्रह्मणे ब्रह्मरूपाय तस्मै देवाय हविषा हविष्येण विधेमोपचरामेति प्रार्थना ॥ १३ ॥

कलिलस्य तमसो मध्ये गूढमिति शेषः ॥ १४ ॥

काले स्थितिकाले युक्ता योगमाश्रित्य प्रवृत्ताः । ब्रह्मर्षिग्रहणं देवर्षिराज-

---

१ घ. °षयै र° । २ ग. °या संपन्नं । ३ घ. प्रपन्नं । ४ घ. °शस्यैति प्राप्नोति । इतीति पाठे छान्दसो गुणाभावः ॥ ७ ॥ ५ घ. °दाध्ययन° । ६ घ. °ज्ञाः सपशवः । क्रतवोऽपशवः । व्र° । ७ क. ख. °काः स्थिताः ।

र्षीणामप्युपलक्षणम् । ब्रह्मा ऋषय इति वा छेदः । देवताश्च चादैत्यादयोऽपि मृत्योः संसारस्य पाशान्वासनारूपान् ॥ १५ ॥

घृतात्परं घृतस्योपरि[1] वलितं मण्डमुपरि पृथुलाकारं सूक्ष्मांशम् ॥ १६ ॥

हृदा हृत्पुण्डरीकेणाऽऽश्रयेण मनीषा मनीट् जितसंकल्पा बुद्धिस्तया । मनसा मनःस्वरूपयाऽभिक्लृप्तो भातः । मनसैवानुद्रष्टव्यमिति श्रुतेः ॥ १७ ॥

यदाऽतमः । यदा यस्मिन्कालेऽतमस्तमोनिवृत्तिर्भवति तत्तदा न दिवा दिवसो न रात्रिर्यामिनी न सत्कारणं नासत्कार्यम् । किं तर्हि शिव एव केवलो निर्विकारः सवितुः सूर्यस्य वरेण्यं भर्गोऽपि तदेव । पुराणी प्रज्ञा शास्त्रोत्थविद्या तस्मात्प्रसृता प्रवृत्ता ॥ १८ ॥

नैनमूर्ध्वमूर्ध्वभागे न तिर्यञ्चं दिगायतनमध्ये यतो दश दिशः प्रवृत्तास्तत्र न परिजग्रभत् । न कश्चित्परिगृहीतवान् । प्रतिमोपमा ॥ १९ ॥

न संदृश इति । व्याख्यातम् ॥ २० ॥

अजात इत्येवमिति । अहं कश्चिन्मयैवाज्ञातस्वरूपो जीवो भीरुर्जन्मभीरुः सन्नजात इत्येवमजातः स्यामित्येवं हेतुना यत्ते तव दक्षिणमुपदेशकुशलं मुखं तत्प्रपद्ये । हे रुद्र तेन मुखेन मां नित्यं पाहीत्यन्वयः । त्वदुपदेशान्मुच्येऽह-मिति भावः ॥ २१ ॥

नोऽस्माकं तोके बालके तनये पुत्रे मा रीरिषः । मा हिंसीः । आयावायुषि । उकारान्तोऽयं यथा वायुना जगदायुनोति । गोषु पशुषु मा रीरिषः । रुष रिष हिंसायां यङ्लुगन्ताल्लुङ् । ननु त्वद्रक्षणाय दुर्दान्तांस्त्वदपराधकारिणो वीरान्गणान्हन्मीत्यत आह—नोऽस्मत्संबन्धिनो भामितः[3] क्रोधवतो वीरान्मा वधीर्मा हिंसीः । त्वदनुगृहीतमात्रस्यैव मे दुर्दान्तभूतवेतालादिकृतपीडानवसर इति त्वया न ते हिंस्या इति भावः । ननु भक्ताधीनः प्रभुः सदेतिप्रसिद्धेर्भक्त्या भाव्यमत आह—हविष्मन्त इति । सदं सदोमण्डपं प्रति । इदनर्थको निपातः । त्वा त्वां हवामह आवाहयामो यज्ञभागग्रहणाय ॥ २२ ॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

१ क. ख °रि चलि° । २ ग. घ. मननरू° । ३ ग. घ. °मिनः को° ।

अथ पञ्चमोऽध्यायः ।

द्वे अक्षरे जीवब्रह्मणी नित्यं विज्ञानम् । न जीवो म्रियत इति च श्रुतेः । ब्रह्मपुरे देहेऽनन्ते ज्ञानं विना यस्यान्तो नास्ति । अश्वत्थं प्राहुरव्ययमिति स्मृतेः । यद्वा—अनन्ते इत्यक्षरयोर्विशेषणम् । यत्र ब्रह्मपुरे विद्याविद्ये गूढे गुप्ते सत्यौ निहिते मुक्ते[1] तत्साध्यत्वात्तयोः । क्षरं त्वविद्या । अविद्या कर्म तत्फलत्वात्क्षरस्य कार्यस्य । अमृतं तु विद्याऽमृतरूपमोक्षहेतुत्वात् । विद्याविद्ये ईशत ईष्टे यस्तु सोऽन्यः परमात्मा तयोः स्वामी न तु तद्रूपः । अन्तःकरणवृत्तिरूपत्वाद्विद्याविद्ययोः ॥ १ ॥

संप्रतीश्वरस्य संसरज्जीवानुग्राहकत्वमाह—य इति । यो जीव एकः कुटुम्बरहितः संन्योनिं योनिं मनुष्यतिर्यगादिचतुरशीतिलक्षजीवयोनिमधितिष्ठति गर्भवासेनाऽऽरोहति । विश्वानि रूपाणि मनुष्यादिनानासंस्थानभेदभिन्नशरीराणि सर्वा योनीश्च तत्तज्जीवशरीरसमवेताः पुंलिङ्गस्त्रीलिङ्गरूपा अधितिष्ठति स्वस्वरूपतयाऽभिमन्यते तमृषिं प्रसूतेः प्राग्दर्शनवन्तम् । आहारा विविधा भुक्ताः पीता नानाविधाः स्तना इत्यादिपूर्वापरानुसंधानवन्तम् । ततः प्रसूतं प्रसूतिवाय्वाघातेनापहृतज्ञानमत एव कापिलं विस्मृतपूर्वापरानुसंधानतया हतप्रभं धवलच्छायम् । अथवा विषयेष्वप्रवृत्ततया जातमात्रं कपिलमुनिमिव स्थितमेवंविधं तमग्रे प्रथमं य ईश्वरो ज्ञानैर्ज्ञायत एभिरिति ज्ञानानीन्द्रियाणि तैः स्तन्यपानादिप्रवृत्तिहेतुभूतदर्शनस्पर्शनादिज्ञानदानेन बिभर्ति पुष्णाति । तथा जायमानं चकारान्म्रियमाणं च पश्येत्कर्मानुकूलतत्तदपेक्षितपदार्थदानेन संभावयति ॥ २ ॥

जालं कर्मफललक्षणं बन्धं बहुधा विकुर्वन्ननेकधा विक्रियां नयन्नेकैकस्य कर्मणो देहादिभोगोपकरणानेकफलत्वात् । यस्मिन्क्षेत्रे ब्राह्मणादियोनौ संभवति जायत एष देवो जीवस्तत्र जायमानं पश्येदिति पूर्वेणान्वयः । पतयः पतींश्चक्षुराद्यधिष्ठातॄन्सूर्यादीन्विभक्तिव्यत्ययः सृष्ट्वाऽथानन्तरमीश ईश्वरः सर्वाधिपत्यं देहेन्द्रियादिस्वाम्यं जीवस्य कुरुते महात्मा व्यापकः ॥ ३ ॥

तदेवाऽऽह—सर्वा इति । प्रकाशयन्स्वाध्यस्ततया भासयन्भ्राजते स्वप्रकाशतया स्फुरति । यदु अनड्वान्यथा गोमण्डलेऽनड्वान्षण्ढः स्वतन्त्र एवं देहादिसंघाते स देव ईश्वर इत्यर्थः । भगवान्परमेश्वर एवं वरेण्यः सर्वोत्तमो योनिस्वभावान्स्वभावशून्यान्रज्जुसर्पप्रायानध्यस्तान्भावानधितिष्ठत्येकः शैलूषवदे-

१ क. ख. मुक्तौ त° ।

कोऽपि नानाविधो भवति। अत्र क्वचिज्जीवलिङ्गसद्भावेऽपि प्रकरणात्पुरुषार्थपर्यवसानाचेश्वरपरा एवैते मन्त्राः ॥ ४ ॥

यश्च स्वभावं वागादीनां पचाति फलानुकूलं करोति प्राच्यान्पूर्वोत्पन्नान्धर्मादीन्परिणामयेत्फलोन्मुखान्करोति। एकः सन्विश्वमधितिष्ठति गुणान्धर्मान्सत्त्वादीनिन्द्रियाणि च यो विनियोजयेत्स्वस्वकार्येषु प्रयुङ्क्ते ॥ ५ ॥

वेदेषु गुह्या या उपनिषदस्तास्वपि गूढं गुप्तं तद्ब्रह्म परमात्मानं विन्दते लभतेऽर्थाज्जीवः। ब्रह्मयोनिं ब्रह्म वेदस्तस्य योनिमुत्पत्तिस्थानं ये देवाः पूर्वं तद्विदुस्तेऽमृता बभूवुः ॥ ६ ॥

इदानीं यत्पुरुषार्थसिद्धय ईश्वरस्वरूपं निरूपितं तं जीवं देहाद्यसंकीर्णतया ज्ञापयितुं वैराग्यार्थं तस्य संसारं वर्णयितुमाह—गुणान्वयो य इति। यो गुणान्वयो गुणैरिन्द्रियैरन्वयोऽस्य स तथा स फलकर्मकर्ता फलयुक्तं कर्म फलकर्म तस्य कर्ता जीवः स च स एव तस्यैव स्वस्यैव कृतस्य कर्मण उपभोक्ता सर्वं स्वकृतभुज इत्यर्थः। स जीवो विश्वरूपो जाग्रदवस्थः। त्रिगुणः सत्त्वादिगुणत्रययुक्प्राणाधिपः प्राणी स्वकर्मभिः शुभाशुभैस्त्रिवर्त्म त्रिविधं मार्गं धूमार्चिरधोगतिलक्षणं संचरति स्वगतिविषयी करोति ॥ ७ ॥

अङ्गुष्ठमात्रो दहरनिवासी रवितुल्यरूपः प्रकाशात्मा संकल्पादियुक्तः। तस्य चिदचिद्रूपता कुतोऽत आह—बुद्धेरिति। बुद्धेर्गुणः संकल्पाहंकारादिः। आत्मगुणो रवितुल्यरूपता ताभ्यामुपलक्षितो हि दृष्टोऽवरोऽपि सूक्ष्मोऽपि स[1] वालाग्रात्संभावितः ॥ ८ ॥

तदेवाऽऽह[2]—वालाग्रेति[3]। वालस्य यदग्रं तस्य यः शततमो भागस्तस्यापि शतप्रकारैः कल्पितस्य यो भागः स जीवो विज्ञेयः। तादृशः सूक्ष्म इत्यर्थः। स च सोऽप्यानन्त्यायानन्तसंसारारम्भणाय कल्पते समर्थो भवति। अनन्तशक्ति[4]परमेश्वरांशत्वात्। अथ च स सूक्ष्मोऽप्यानन्त्याय ब्रह्मभावाय कल्पते। व्यापकत्वश्रुतिस्तु तस्य भगवदभिन्नत्वेन[5] युज्यते ॥ ९ ॥

शरीरधर्मा नैनं स्पृशन्तीत्याह—नैष इति। तर्हि कथं तैर्व्यपदेश इत्यत आह—यद्यदिति। तेन तेनौपाधिकेन स आत्मा ॥ १० ॥

संकल्पनेति। संकल्पनं मनसोद्देशः[6] स्पर्शनमङ्गसङ्गो दृष्टिर्दर्शनव्यवहारो होमः कर्मानुष्ठानं तैर्ग्रासो भोजनमम्बुवृष्टिर्मेघवृष्टिस्तया च ग्राससहितयाऽऽत्मनो

---

१ ग. स वाला॰। २ ग. ॰ह–वाला॰। ३ ग. ॰ति वाल॰। ४ घ. ॰क्तित्वा॰। ५ घ. ॰वत्त्वेन। ६ क. ॰द्देशं स्प॰।

चा विवृद्धिर्धर्मज्ञानोपचयो जन्म ब्राह्मणादियोनिः कर्माग्निष्टोमादि तदनुगानि तदनुसारीण्यनुक्रमेण विरुद्धदेहानां यौगपद्यासंभवात्क्रमेण देही जीवः स्थानेषु स्थावरजङ्गमेषु ब्रह्मादिस्तम्बपर्यन्तेषु रूपाणि शरीराण्यभिसंप्रपद्यते प्राप्नोति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्रह्मयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा[1] सूकरयोनिं वा[2] चाण्डालयोनिं वेति श्रुत्यन्तरात् । अनेन मन्त्रेण पञ्चाग्निहोत्रविद्या सूचिता ॥ ११ ॥

तदेव विवृणोति—स्थूलानीति । स्थूलानि देवमनुष्यादीनि सूक्ष्माणि तिर्यक्स्थावरादीनि स्वगुणैः सत्त्वादिभिर्वृणोत्यादत्ते । क्रियागुणैर्धर्माधर्माख्यैरात्मगुणैर्मनोगुणैर्ज्ञानवासनादिभिः कृत्वा तेषां देहानामपरोऽपि स्वगुणभिन्नोऽपि संयोगहेतुः प्राप्तिनिमित्तं दृष्ट उपलब्धः । तमेतं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेत्यादिश्रुतेः ॥ १२ ॥

इतः संसारचक्रान्मोक्षस्योपायमाह—अनाद्यनन्तमिति । कलिलस्य मायाया मध्ये वर्तमानमनेन दुर्ज्ञेयत्वमुक्तमीदृशं देवं ज्ञात्वा सर्वपाशैः सर्वबन्धनेभ्यो मुच्यते ॥ १३ ॥

भावग्राह्यं भक्तिगम्यम् । अनीडाख्यं न नीडो यस्यासावनीडोऽनीड इत्याख्या नाम यस्य स तं निरालम्बनं भावाभावकरं सृष्टिप्रलयकारिणं शिवं कल्याणरूपं कलासर्गकरम् । षोडशकलः पुरुष इति श्रुतेः । लिङ्गं सकललिङ्गशरीरनिर्मातारं देवं ये विदुर्ज्ञातवन्तस्ते तनुं देहं जहुस्तत्यजुर्मुक्ता इत्यर्थः॥१४॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

---

पूर्वोक्तान्कालादीञ्जगत्कारणतया संभावितान्वादिप्रतिभासमर्पितानन्द्य देवमहिम्नाऽन्यथा सिद्धतयाऽपवदति— स्वभावमेक इति । कवयः कु शब्दे वक्तारः परिमुह्यमाना देवमायाविमोहिता नु वितर्के देवस्येश्वरस्यैष महिमा सामर्थ्यं येन महिम्नेदं ब्रह्मचक्रं ब्राह्मणानां वादिनां चक्रं समूहो भ्राम्यते जीवसमूहो वा नानागतीर्नीयते ।

---

१ ग. घ. वा शूक° । २ ग. घ. वा चण्डा° ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ इति स्मृतेः ॥ १ ॥

येनेश्वरेण नित्यमावृतं व्याप्तमिदं सर्वम् । ज्ञः । जानातीति ज्ञः । इगुपधज्ञाप्रीकिरः कः । ज्ञाता । कालकालः कालस्यापि नियन्ता गुणी गुणत्रयमाश्रितः । सर्ववायुः सर्वेषां प्राणः सर्वविद्य इति वा पाठः । तेनेशितं तेनाऽऽक्रान्तं कर्म शुभाशुभं विवर्तते नानारूपं भवति ह प्रसिद्धौ विवर्तत इत्यनेन सर्वोऽपि प्रपञ्चो विवर्तात्मक इत्युक्तं भवति । अतात्त्विकोऽन्यथाभावो विवर्तः साक्षाद्वा परम्परया वा ब्रह्मण एव सर्वः प्रपञ्चो विवर्त इत्यर्थः । विवर्तरूपाण्याह—पृथ्वीति । पृथ्व्यादिरूपं भवति । एतत्सर्वं चिन्त्यं[1] चिन्तामर्हतीति यत् । दृश्यमित्यर्थः ॥ २ ॥

इदानीं वृत्तद्वयेन मोक्षसाधनान्याह—तदिति । तन्मनुष्यशरीरसाध्यं कर्म शुभाख्यं कृत्वा निष्पाद्य भूयस्ततो विनिवृत्य निवृत्त्यभिमुखो भूत्वा तत्त्वस्य तत्त्वेन ब्रह्मणा योगमैक्यं समेत्य प्राप्य तत्त्वमस्यादिवाक्यैः कर्मक्षये स मोक्षं यातीत्यग्रेतनेनान्वयः । को मोक्षं याति कियता कालेन चेत्यपेक्षायामाह—एकेनेति । कश्चिदेकेन जन्मना कश्चिद्द्व्यादिभिर्जन्मभिरष्टपर्यन्तैर्वाशब्दान्न्यूनैरधिकैर्वा यत्नानुसारतः । यदुक्तम्—बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत इति । कालेन हेतुनाऽऽत्मगुणैश्च धर्मज्ञानादिभिः सूक्ष्मैः सूक्ष्मवस्तुप्रकाशिभिर्हेतुभूतैः ॥ ३ ॥

कर्माण्यारभ्योत्पाद्य कीदृशानि गुणान्वितानि विहितानि न तु दोषान्वितानि निषिद्धानि विहितानां गुणान्वितत्वं संयोगपृथक्त्वन्यायेन । सत्त्वशुद्धेरपि प्रातिस्विकफलवत्साधकत्वात् । सर्वान्भावांश्चक्षुरादिविषयान्यः स्वस्वस्थाने विनियोजयेत् । यथा रूपं चक्षुषि चक्षुः सूर्ये सूर्यं तेजसि तेजो वायौ वायुमाकाश आकाशमात्मनि । एवं यः कार्यं सर्वं कारणे ब्रह्मणि विलापयेत्तदा तेषां कार्याणां ब्रह्मभावज्ञानेनाभावे सति । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति स्मृतेः कृतानां कर्मणां नाशः स्वाभाविकी निवृत्तिर्भवति । कर्मक्षये सति स पुरुषस्तत्त्वतो रूपतन्मात्रादिभ्योऽन्यः सर्वासङ्गः सन्याति आत्मस्वरूपं प्राप्नोति । अथवा भावा भावना विषयाभिलाषास्तान्विनियोजयेदात्मनि जुहुयात्स याति तेषां कामानामभावे भोगादिना कृतकर्मनाशः । यदुक्तम्—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ इति ॥४॥

---

1 ग. घ. चित्यं चितम° ।

स आदिः सर्वकारणानां संयोगनिमित्तहेतुः संयोगनिमित्तानि संघातकारणानि स्वभावकालादीनि तेषामपि हेतुः परः सर्वोत्कृष्टः ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ इति श्रुत्यन्तरात् ।

अत एव त्रिकालात्कालत्रयोपसृष्टात्परः । अकलोऽपि निरञ्जनोऽपि दृष्टः स्वप्रकाशत्वादपरोक्षीभूतः । साक्षादपरोक्षाद्ब्रह्मेति श्रुतेः । भवभूतं भवत्वं रुद्रत्वं प्राप्तमीड्यं स्तुत्यं स्वचित्तस्थम् । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मृतेः । यद्वा—स्वचित्तस्थं ध्यानारूढं पूर्वमुपास्य ज्ञानोत्पत्तेः प्रागाराध्य यातीति पूर्वेण संबन्धः ॥ ५ ॥

स इति । स परः परमेश्वरो वृक्षैः शरीरैः कालेन क्रिययाऽऽकृतिभिर्जातिभिरुपलक्षितोऽपि सन्नन्यस्ताभ्यो भिन्नोऽसङ्गत्वात् । यस्मादीश्वरादयं प्रपञ्चः परिवर्तते चक्रवदावर्तते धर्मावहं धर्मजनकं स्मरणादिना पापनुदं दुष्कृतनाशकं भगेशं भाग्याधिपमात्मस्थमात्मत्वेन स्थितं ध्यानेन बुद्धिस्थं वाऽमृतं यतो मृत्युभयमपैति । विश्वधाम विश्वाधारं ज्ञात्वा यातीत्यन्वयः ॥ ६ ॥

इदानीमृषिस्तज्ज्ञानं प्रार्थयते—तमीश्वराणामिति । तं विदाम जानीमेति प्रार्थनायां लोट् छान्दसो गुणाभावः परस्तात्परेभ्योऽपि परमम् ॥ ७ ॥

न तस्येति । साधननिरपेक्षः फलनिरपेक्षश्चेत्यर्थः । न तत्समस्तत्तुल्यस्तदधिको वा न दृश्यते युक्त्योपलभ्यते । अनेकेश्वराधिष्ठितत्वे युगपदुत्पादविनाशप्रसङ्गात् । शक्तिः श्रूयते वेदेषु स्वाभाविकी सहजासिद्धा ज्ञानबलाभ्यां युक्ता क्रिया क्रियाशक्तिः ॥ ८ ॥

न तस्य कश्चिदिति । पतिरधिपतिः । ईशिता नियन्ता लिङ्गमव्यभिचरितो धर्मोऽनुमितिसाधनं स च तस्य नास्त्यधर्मत्वादौपनिषदत्वाच्च । क्षित्यादिकार्यलिङ्गं तु न यथाभिमतेश्वरसाधकम् । सकारणं कारणसहितं लिङ्गं नास्ति कारणमपि नास्तीत्यर्थः । सकारणत्वं तत्कारणमेवेश्वरः स्यान्न कार्यं पारतन्त्र्यात्तथा चानवस्था स्यात् । करणाधिपा अन्तःकरणाद्यधिपा देवास्तेषामप्यधिपोऽधिष्ठाता जनिता जनयिता । जनिता मन्त्र इति णिलुक् । अधिपोऽध्यक्षः ॥ ९ ॥

यस्त्विति । ऊर्णनाभो लूताकीटः स यथा तन्तुभिरात्मदेहसंभवैरात्मानं समावृणोति एवं प्रधानजैः प्रकृतिसंभूतैर्वासनादिभिः स्वभावत एवाऽऽत्मानं गुप्तं करोति स देवो नोऽस्मभ्यं ब्रह्म स्वस्वरूपं दधातु ॥ १० ॥

एक इति । एकः प्रधानं कर्माध्यक्षः कर्माधिष्ठाता कर्मणां तदधीनफलत्वात्साक्षी साक्षादव्यवधानेन स्वाध्यस्तं विश्वमीक्षते चेता संहन्ता । चिञ्चयने ॥ ११ ॥

एको वशीति । वशोऽधीनः सर्वोऽस्यास्तीति वशी निष्क्रियाणां निर्व्यापाराणां व्योमादीनां वशी स्वेच्छया व्यापारकः । एकमेकरूपमात्मानं बहुधा नाना यः करोति । स एकधा भवति त्रिधा भवति पञ्चधेत्यादि श्रुत्यन्तरात् । आत्मस्थं बुद्धौ चैतन्याकारेणाभिव्यक्तं न हि शरीरमात्मन आधारस्तस्यामूर्तत्वात् । शाश्वतमात्मानन्दलक्षणं नेतरेषां बाह्यासक्तबुद्धीनाम्[1] ॥ १२ ॥

*नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ।

तदेतादिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति न भाति वा ॥

तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः (॥ १३ ॥)

नित्यानां नित्यत्वेनाभिमतानां[2] व्योमादीनां मध्ये यो नित्यः परमार्थाविनाशी चेतनानां लिङ्गादीनां मध्ये यः परमार्थचेतनः । चक्षुषश्चक्षुरित्यादिश्रुतेः[3] । बहूनां जीवानां य एकः सन्कामान्भोगान्विदधाति तमात्मस्थं बुद्धिस्थं धीराः पटुधियः[4] । तद्ब्रह्मैतत्प्रत्यक्षं मन्यन्ते स्वानुभवतो विद्वांसः । अनिर्देश्यम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति मन्त्रवर्णात् । विजानीयां स्वानुभवतो भाति न भाति वेति संशयान्तो मन्त्रो दुष्प्रापतां व्यनक्ति । संशयं निराकरोति—तत्कारणमिति । कार्येण कारणमनुमेयमिति भावः । विद्वत्प्रत्यक्षमपि प्रमाणयति—सांख्येति । संख्यायत आत्माऽनेनेति सांख्यं ज्ञानं योगो निष्कामकर्मानुष्ठानमासनप्राणायामादिसाध्यश्चित्तनिरोधो वा ताभ्यामधिगम्यम् । ज्ञाने फलमाह—ज्ञात्वेति । १२ ॥

स्वप्रकाशे तत्र प्रमाणान्तरं नावतरतीत्याह—न तत्रेति । भाति प्रकाशको भवति । अनुभाति तद्भानानन्तरं तदध्यस्ततया भासते यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तद्वत् । अनेन न भातीति पक्षो निरस्तः । किं स्वातन्त्र्येण नेत्याह—तस्येति । तदुक्तम्—

* नित्यो नित्यानामित्याद्यर्धानन्तरं तत्कारणमित्याद्यर्धं भाष्यकारादिभिर्गृहीतं व्याख्यातं च तमात्मस्थमित्यादि न भाति वेत्यन्तं मूलभूतं शब्दजातमनेनैव दीपिकाकारेण गृहीत्वा व्याख्यातम् । भाष्यकारादिभिस्तु न गृहीतं न व्याख्यातं च ।

१ घ. °द्धीनां तमात्मस्थं बुद्धिस्थं धीराः पटुधियः ॥ १२ ॥ २ ख. ग. ब. °त्यत्वाभि° । ३ घ. °ति । अनि° । ४ ग °यः । अनि° ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ इति ॥ १४ ॥

एक इति । हंसो हन्त्यज्ञानमिति भुवनस्य सरःस्थानीयस्य । तत्रैकस्मिन्नेव रुद्धाः शक्तयः समाविशन्तीत्याह—स एवाग्निः । स एव सलिल उदके संनिविष्टोऽतिमृत्युमेति मृत्युमत्येति । ईशनायेशत्वाय ॥ १५ ॥

तस्य विशेषणैर्गुणकर्माण्याह–स विश्वकृदिति । विश्वं करोतीति विश्वकृत् । विश्वं वेत्तीति विश्ववित् । जानातीति ज्ञः कालकालः कालस्यापि नियन्ता गुणी सत्त्वादिप्रधानः सर्वविद्य ऋगादिविद्यास्थानम् । प्रधानं प्रकृतिः क्षेत्रज्ञो जीवस्तयोः पतिः । गुणेशो गुणनियन्ता संसारादीनां चतुर्णां हेतुः ॥ १६ ॥

स इति । स ईशस्तन्मयः संसारप्रायः प्राणादिपञ्चकोशमयत्वात् । ईशसंज्ञ ईशन्नामा ज्ञो ज्ञाता । ईश ईष्टे ॥ १७ ॥

य इति । प्रहिणोति । ददाति । आत्मबुद्धिप्रकाशमुपदेशागम्यम् । मनसैवानुद्रष्टव्यमिति श्रुतेः । स्वावरणयोः शरीरान्तःकरणयोर्भासकमिति वा मुमुक्षुर्मुक्तिकामोऽहं श्वेताश्वतरो मुनिः ॥ १८ ॥

निष्कलमिति । कलाः षोडश पूर्वोक्तास्तद्रहितं निष्क्रियमविकारत्वात्पूर्णत्वाच्च । अमृतस्य परं सेतुं परमामृतमित्यर्थः । शरणमहं प्रपद्य इति पूर्वेणान्वयः ॥ १९ ॥

यदेति । चर्म यथा शरीरं सर्वतो वेष्टयति तद्वद्यदा भूतलसंनिहितमाकाशं मनुष्या वेष्टयिष्यन्ति । असमाविशन्त ऊर्ध्वहस्ता भूतले विचरिष्यन्तीत्यर्थः । तदा देवमीश्वरमविज्ञाय ब्रह्मज्ञानमन्तरेणैव दुःखस्यान्तो निवृत्तिर्भविष्यति । ईश्वरोऽप्राकृतं प्रलयं जीवविश्रमार्थं करिष्यतीत्यर्थः । अत एव दुःखस्यान्त उक्तो न त्वानन्दावाप्तिरिति । दुःखान्तं मोक्षमेव केचिद्व्याचक्षते । तत्तु ज्ञानादेव तु कैवल्यं तमेव विदित्वा नान्यः पन्था विद्यत इत्यादिवाक्यैर्ज्ञानव्यतिरिक्तमोक्षसाधननिरासात्साहसमात्रम् । यद्वा कर्मादिना देवमविज्ञायाज्ञात्वा मुमुक्षवो यदा चर्मवदाकाशं मृगचर्मादिवन्नभ एव सर्वं संन्यस्य वेष्टयिष्यन्ति शरीरे परिधास्यन्ति त्यागैकपरा भविष्यन्ति तदा दुःखस्यान्तो मोक्षो भाविष्यति । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतेः । यद्वा यथाऽमूर्तस्याऽऽकाशस्य चर्मवत्परिधानासंभवस्तथा देवाज्ञाने मोक्षासंभव इत्येवंपरमेतत् । यदुक्तम्—तमेव विदित्वेति । तेन देवाराधने यत्न आस्थेय इति भावः । अयमर्थ आचार्यसंमतः । चर्मवदाकाशवेष्टनासंभववदविदुषो

---

१ घ. °रो महाप्र° ।

मोक्षासंभवश्रुतेरिति सर्वधर्मान्परित्यज्येतिश्लोके शांकरगीताभाष्य उक्तत्वात् ॥ २० ॥

श्वेताश्वतरस्य मुनेर्ज्ञानसाधनानि परानुपदेष्टुमाख्यायिकारूपेणाऽऽह—तपः-प्रभावादिति। तपसः सामर्थ्याद्देवस्य महेश्वरस्य प्रसादाच्च श्वेताश्वतरो मुनिर्ह प्रसिद्धौ ब्रह्म विद्वान्विदन्सन्नथ पश्चादन्त्याश्रमिभ्यः संन्यासिभ्यः परमं ज्ञानं सम्यक्प्रोवाचोपादिष्टवान् ॥ २१ ॥

वेदान्त इति। वेदस्यान्त उपनिषत्तत्र परमं गुह्यमत्यन्तगोप्यं पुराकल्पे पूर्वसृष्टौ प्रचोदितमुपदिष्टमनादिपरम्परायातमित्यर्थः। विद्याधिगमे षट्तीर्थानि तेषामिहेश्वरभक्तिसाधनक आत्मज्ञाने द्वे एवाभ्यनुज्ञायेते। शान्तः पुत्रः शिष्यो वा तदनधिकारिणे न देयमवीर्यवती तथा स्यामिति श्रुतेः ॥ २२ ॥

देवभक्तिवद्गुरुभक्तेरप्यन्तरङ्गसाधनतामाह—यस्य देव इति। द्विरुक्तिः समाप्त्यर्था। इतिस्तद्द्योतकः ॥ २३ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां श्वेताश्वतरदीपिका ॥

इति श्रीनारायणविरचितायां श्वेताश्वतरोपनिषद्दीपिकायां
षष्ठोऽध्यायः ॥ ६ ॥

समाप्ता चेयं दीपिका ॥

# श्वेताश्वतरोपनिषद्विवरणं विज्ञानभगवत्कृतम् ।

---

अवच्छेदत्रयातीतनिर्मलज्ञानमूर्तये ।
मनोगिरां विदूराय दक्षिणामूर्तये नमः ॥ १ ॥
निगमान्तप्रदीपाय निःसङ्गसुखसंविदे ।
संसारतापनोदाय विद्याश्रीपतये नमः ॥ २ ॥
प्रत्यस्ताखिलभेदाय जगद्विभ्रमसाक्षिणे ।
ज्ञानोत्तममुनीन्द्राय नमः प्रत्यक्सुखात्मने ॥ ३ ॥

नमः परमऋषिभ्यो नमो ब्रह्मविद्यासंप्रदायकर्तृभ्यः[1] । ब्रह्मवादिनो वदन्तीति[2] । इदं ब्राह्मणवाक्यं वादिनो वदनशीला वेदार्थविपरीतपक्षान्निर्मूलीकृत्य वेदार्थत्वेन ब्रह्मवदनशीलाः साक्षाद्वा[3] परम्परया वा सर्ववेदार्थत्वेन ब्रह्म वदन्तीत्येतत् । सर्वे वेदा[4] यत्पदमामनन्तीतिश्रुतेः । इममेव ब्राह्मणवाक्यार्थमोपनिषत्[5]समाप्तेरुत्तरे[6] मन्त्राः प्रतिपादयन्ति । किं कारणमिति । किं कारणं ब्रह्म जगदुपादानकारणं ब्रह्म किमन्यद्वा जगदुपादानकारणं ब्रह्म कीदृशं शुद्धमविद्यामिलितं वा । अथवा ब्रह्म किं कारणमविशेषेण निमित्तोपादानकारणं वा । आहोस्विन्निमित्तकारणमेव । कुतः स्म जाता आकाशादिवत्स्थित्यवस्थायां ब्रह्मकार्यभूताः सन्तः सुषुप्तिप्रलयादिषूपादानकारणभूतब्रह्ममात्रतया विलयं गताः सन्तः प्रबोधसर्गादिसमय उपादानकारणभूतब्रह्मणः कार्यत्वेन वयं जाताः । आहोस्विज्जलचन्द्रस्थानीया घटाकाशस्थानीयाँ वा वयं सुषुप्तिप्रलयादिषूपाधिविलये विम्बचन्द्रमहाकाशस्थानीये ब्रह्मण्यैक्यमु[8]पगताः सन्तः[9] प्रबोधसृष्ट्यादिसमये ब्रह्मविवर्तकार्य[10]कारणादिमन्तो विम्बचन्द्रमहाकाशस्थानीयब्रह्मणः सकाशाज्जाता जीवाम केन । लडर्थे लोट् । जीवामः[11] केन वयं जीवाम । अदृष्टेन किमीश्वरेण वोतोभयेनाऽऽहोस्वित्स्वभावेन । क्व च संप्रतिष्ठा । मोक्षावस्थायामस्माकं विकारीभूते ब्रह्मणि किमेकत्वेनावस्थानमुत स्वतोऽविकारिणि मायामिलितत्वेन विकारिणि ब्रह्मण्येकत्वेनावस्थानमाहोस्विदविद्याख्यां मायां विद्यया ब्रह्ममात्रतया प्रविलाप्य विशुद्धे ब्रह्मण्येकत्वेनावस्थानम् । क्व च संप्रतिष्ठिता[12] इत्यस्मिन्पाठे मोक्षावस्थायां कीदृग्रूपे ब्रह्मणि वयमेकत्वेना-

---

१ ख. °भ्यः । इदं ब्राह्मणवाक्यं ब्र° । २ ख. °ति । वा° । ३ ख. °क्षात्पर° । ४ ख. °तेः ॐ किंकारणमिति । इ° । ५ ख. °षत्परिसमा° । ६ क. घ. °त्तरम° । ७ क. ग. °याश्च व° । ८ ख. ग. °मुपाग° । ९ ख. °न्तःसम्यक्प्रबो° । १० ग. °र्यकर° । ११ ख. °वामः । अ° । १२ क. °तिष्ठा इ° ।

वस्थिता इति योजयितव्यम् । अधिष्ठिताः केन । किंच[1] केवलादित्याद्यधिदैवतैरधिष्ठिताः सन्तः सुखेतरेषु सुखदुःखेषु परवशत्वेन वर्तामह आहोस्विदीश्वरेणोतोभाभ्यां[2] ब्रह्मविदो हे ब्रह्मविदो वयं व्यवस्थां विनिर्णयं सह विचिन्त्य कुर्यामिति ॥ १ ॥

ब्रह्मकारणविपरीतकारणपक्षान्क्रमेणोपन्यस्य दूषयति—कालस्वभाव इति। संसारचक्रस्य काल एव कारणमिति कालविदः प्रतिपेदिरे । स्वभाव इति लोकायतिकाः । नियतिर्नियमः पुण्यापुण्यलक्षणः स एव कारणमिति मीमांसकाः । पूर्वपूर्वकल्पेषु जीवैः संचितपुण्यापुण्यानुगुणतया जगत्सर्वज्ञेनेश्वरेणोत्तरकल्पादौ न सृज्यते किंतु बुद्धिमत्कर्तृकत्वमन्तरेण यदृच्छया जायत इति निरीश्वराः । भूतानि कारणमिति जगन्नित्यत्ववादिनः । योनिः प्रकृतिः कारणमिति प्रकृतिवादिनः शाक्ताः । योनिरिति कालादिभिः प्रत्येकं संबध्यते । पुरुषो हिरण्यगर्भ एव कारणमिति योगशास्त्रविदः । इतीत्थं चिन्त्यं चिन्तामात्रमेव न त्वर्थसिद्धिः । अथवा सदा चिन्त्यमेव कदाचिदपि चिन्तितं न भवेत् । चिन्त्यं विचारणीयमिति वा । एतान्पक्षान्दूषयति—संयोग एषां न त्विति । एषां पूर्वोक्तानां कालादीनां प्रत्येकं कारणत्वं न त्वेषां संयोगोऽपि कारणं न भवेत् । तुश्चार्थे मन्त्रोच्चारणे विशेषार्थे वर्तते । एषां कारणत्वासंभवेऽभिप्रेतो विशेषः क इत्यपेक्षायामाह—आत्मभावादिति । एतान्भोग्यत्वेन स्वीकृत्य स्थितस्य भोक्तुरात्मनो भावादत एषां भोग्यत्वेन परतन्त्रत्वात्स्वतन्त्रतया मूलकारणत्वं न संभवेत् । तर्हि स एव भोक्ता कारणं भवत्वित्याशङ्क्याऽऽह—आत्माऽप्यनीश इति । आत्माऽपि कारणं न संभवेत् । कुतः । जगन्निर्माणे यस्मादयमनीशोऽसमर्थः । तस्यानीशत्वं कथमित्यपेक्षायामाह—सुखदुःखहेतोरिति । पुण्यापुण्यवशत्वेन सुखदुःखहेतुतया वर्तमानत्वात् । अथवाऽऽत्माऽपि जगन्निर्माणेऽनीशोऽसमर्थः । कुतः । सुखदुःखहेतोः सुखदुःखयोः कर्तृत्वाद्धेतोः ॥ २ ॥

पूर्वपक्षान्निराकृत्य ब्रह्मविदः किं जगत्कारणत्वेन दृष्टवन्त इत्यपेक्षायामाह—ते ध्यानयोगानुगता इति । ध्यानमेव योगो ध्यानयोगो ध्यानेनाभिमतोऽर्थो[3] युज्यते लभ्यत इति ते तं ध्यानलक्षणयोगमनुगता जगन्मूलकारणमपश्यन् । तत्किमित्यपेक्षायामाह[4]—ते देवात्मशक्तिं देवस्य द्योतनस्वभावस्याखण्डचिदेकरसस्याभेदाध्यासेनाऽऽत्मभूतां स्वरूपभूतां केवलचितोऽविकारित्वात्कारण-

१ ख. ग. किं वयं के° । २ ख. °भ्यां हे । ३ ख. °मतार्थो° । ४ ख. ग. °ह । दे° ।

त्वासंभवात्तदभेदाध्यासेन नियमेन तत्परतन्त्रतया तस्य देवस्य सर्वजगदुत्पत्तिस्थितिलयकारणत्वनिर्वोढृतया वर्तमानत्वाच्छक्तिशब्दाभिधेयां मायां जगत्कारणत्वेनापश्यन् । तामेव पुनरपि विशिनष्टि—स्वगुणैर्निगूढामिति । स्वस्या गुणैः स्वगुणैः सत्त्वरजस्तमोलक्षणैस्तन्मूलैः स्रष्टृत्वस्थापकत्वसंहर्तृत्वादिगुणैश्च निगूढां नितरां गूढां गुणविधुरकेवलप्रकृतिस्वरूपस्य द्रष्टुमशक्यत्वान्निगूढामित्युच्यते । मायां जगतः परिणामिकारणत्वेनापश्यन्नित्युक्तं मायायाः स्वरूपप्रदत्वेन स्फुरणप्रदत्वेन चाधिष्ठानत्वान्मायाविलसितभूततन्मात्रप्रमुखाणि कारणानि निखिलानि सर्वाणि तानि पूर्वोक्तानि कालप्रभृतीन्यात्मपर्यन्तानि तत्संयुक्तव्यष्टिभूतानि यानि तानि कालात्मयुक्तानीत्युच्यन्ते । तानि सर्वाणि स्वरूपप्रदतयाऽऽनन्दप्रदतया स्फुरणप्रदतया चाधितिष्ठति यः सच्चिदानन्दैकरस एकोऽद्वितीयः परमात्मा तमपि सर्वाधिष्ठातृत्वेन निर्वाहकमपश्यन् ॥ ३ ॥

पूर्वोक्तमन्त्रप्रकारेण माययैक्याध्यासमुपगतत्वेन जगदुत्पत्तिस्थितिलयकारणभूतं सत्यसच्चित्सुखैकरसमात्मानं चक्रत्वेन निरूपयत्युत्तरो मन्त्रो वैराग्यहेतुः तमेकनेमिमिति । तं देवशब्दनिर्दिष्टमधिष्ठातारमात्मानं पूर्वमन्त्रे शक्तिशब्दनिर्दिष्टोत्तरत्र मायाशब्दनिर्दिष्टैकाऽखण्डा प्रकृतिः संसाररथभ्रमणनिर्वाहकत्वेन नेमिः सा यस्य तमेकनेमिं त्रिवृतं त्रिभिः सत्त्वरजस्तमोभिरेतत्संपर्कनिमित्तसृष्टिस्थितिसंहारशक्त्यात्मकब्रह्मविष्णुशिवाख्याभिस्तिसृभिर्मूर्तिभिश्च वृतमावृतं षोडशान्तं प्राणश्रद्धाभूतपञ्चकेन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामाख्याः प्रश्नोपनिषत्पठिताः षोडश कला अन्तोऽवसानं विस्तारसमाप्तिर्यस्य तं षोडशान्तं षोडश विकारा अन्तो यस्य तमिति वा शतार्धारं निखिलशब्दविशेषविजृम्भणकारणभूता अकारादिपञ्चाशद्वर्णा अरा इवारास्ते यस्य तं शतार्धारं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थतद्विषयशब्दस्पर्शरूपरसगन्धवचनादानविहरणोत्सर्गानन्दतदधिदैवतदिग्वाय्वादित्य * वरुणपृथिव्यग्नीन्द्रत्रिविक्रममृत्युप्रजापतिमनोबुद्ध्यहंकारचित्ततद्विषयमन्तव्यबोद्धव्याहंकर्तव्यचेतयितव्यतदधिदैवतचन्द्रबृहस्पतिरुद्रक्षेत्रज्ञतमस्तद्विकारतदधिदेवेश्वरप्राणापानव्यानोदानसमानाः प-

---

* अत्र वरुणाश्व्यग्नीन्द्रेत्यपेक्षितम् ।

---

१ क. ख. घ. स्वस्य गु° । २ ख. ग. °न्मूलस्र° । ३ क. घ. °गूढेत्यु° । ४ ख. °मुखका° । ५ ख. ग. °त्यसंवित्सु° । ६ ख. ग. घ. °हेतोः । त° । ७ क. ख. घ. अन्तर्वसा° । ८ क. ख. घ. °स्तारः स° । ९ क. °मयमप्र° । ग. °मनिर्कातिप्र° ।

श्चाशद्वाऽराः। विंशतिप्रत्यराभिः। अष्टौ वसवो द्वादशाऽऽदित्याश्च दशेन्द्रियाणि तद्विषयाश्च वा प्रत्यराः पूर्वोक्तानामराणां दार्ढ्याय प्रतिनिधीयन्ते ये कीलास्ते प्रत्यरास्तैः प्रत्यरैर्युक्तम् । स्त्रीलिङ्गं छान्दसम् । अष्टकैः षड्भिस्तैत्तिरीयोक्तत्वक्चर्ममांसरुधिरमेदोस्थिमज्जानः शुक्रं चेति धात्वष्टकं धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणीति भावाष्टकं गौतमोक्तदयाक्षान्त्यनसूयाशौचमङ्गलानायासाकार्पण्यास्पृहेत्यात्मगुणाष्टकम् । अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चेत्यैश्वर्याष्टकम् ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ इति गीतासूक्तं प्रकृत्यष्टकम् ।

ब्रह्मा प्रजापतिर्देवा गन्धर्वा यक्षराक्षसाः ।
पितरश्च पिशाचाश्च देवाष्टकमुदाहृतम् ॥

इति देवाष्टकम्[2] । भवशर्वेशानपशुपत्युग्रभीमरुद्रमहादेवा देवस्य मूर्तय इति वा मूर्त्यष्टकम् । एतैः षड्भिरष्टकैरुपलक्षितम् । समाहारे कप्रत्ययः । विश्वरूपैकपाशं विश्वरूपतया विवर्तत इति विश्वरूपः कामः स एवैकः प्रधानः पाशः पाश्यते बध्यते सर्वं येनेति पाशः स पाशो यस्य तं विश्वरूपैकपाशम् । त्रिमार्गभेदम् । अर्चिरादिमार्ग एको धूमादिमार्ग एको जायस्व म्रियस्वेत्यधोमार्ग एक एते त्रयो मार्गभेदा यस्य तं त्रिमार्गभेदम् । द्विनिमित्तैकमोहं द्वयोः पुण्यपापयोस्तन्मूलरागद्वेषयोश्च निमित्तकारणं तदेवैकं स एव मोहोऽनात्मन्यात्माभिमानलक्षणो यस्य तं द्विनिमित्तैकमोहम् । अपश्यन्निति क्रियापदमनुवर्तते । अधीम इत्युत्तरमन्त्रादाकृष्यते वा ॥ ४ ॥

मायाधिष्ठानत्वात्तद्विवर्तं सर्वाधिष्ठानत्वेन सर्वात्मकमात्मानं पूर्वमन्त्रेण चक्ररूपेण निरूपितमुत्तरो मन्त्रो नदीरूपेणापि निरूपयति नितरां वैराग्यहेतोः— पञ्चस्रोतोम्बुमिति । पञ्चस्रोतोम्बुम् । पञ्चस्रोतोरूपेणाविच्छेदेन विषयेषु वर्तन्त इति चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि स्रोतांसि तान्यम्बुस्थानीयानि यस्यास्तां पञ्चस्रोतोम्बुम् । पञ्चयोन्युग्रवक्रां[3] पञ्च योनयः पञ्च तन्मात्रास्ता एवोग्राणि[4] वक्राणि प्रवाहगतिसंनिवेशविशेषो वक्रं तानि यस्यास्तां पञ्चयोन्युग्रवक्राम्[5] । पञ्चप्राणोर्मिं प्राणादयः पञ्च वायव ऊर्मिस्थानीयास्ते यस्यास्तां पञ्चबुद्ध्यादिमूलां बुद्धीनामादिभूतानि कारणरूपाणि चक्षुरादिज्ञानेन्द्रियाणि तेषां मूलं विज्ञानशक्तिमदहंकारः स एव संसरणे मूलं यस्यास्ताम् । पञ्चावर्ताम् । आका-

१ ख. °मोक्तं द° । २ ख. देवताष्ट° । ३ ग. घ. °ग्रचक्रां । ४ ग. घ. °णि चक्रा° । ५ ग. घ. °ग्रचक्रा° ।

शादीनि पञ्च महाभूतान्युत्तरोत्तरमेकैकाधिकशब्दादिगुणान्यावर्तस्थानीयानि यस्यास्ताम् । पञ्चदुःखौघवेगां गर्भजन्मव्याधिजरामरणदुःखान्यविद्यास्मितादीनि वा पञ्च दुःखान्योघः पूरस्तस्य वेग ओघवेगः पञ्च दुःखान्येवौघवेगो यस्यास्ताम् । पञ्चाशद्भेदां पञ्चाशदक्षरभेदा यस्यास्तां पूर्वोक्ताः सर्व एवात्रापि गृह्यन्ते । पञ्चपर्वाम् । तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञित इति पुराणसिद्धानि पर्वाणि यस्यास्तामीश्वरान्तर्यामिसूत्रहिरण्यगर्भविराड्रूपाणि पर्वाणि वा यस्यास्तामेवंभूतां नदीमधीमः । अधीम इति पूर्वोक्तेषु विशेषणेषु प्रत्येकं संबध्यते ॥ ५ ॥

किं कारणं ब्रह्मेत्यस्य प्रश्नस्य परिहारमुक्त्वा कुतः स्म जाता इत्यादिप्रश्नस्य परिहारं वक्तुमुत्तरमन्त्राः प्रक्रमन्ते— सर्वाजीव इति । सर्वाजीवे रजतादीनां शुक्त्यादिवद्व्याघ्रादीनां मायाविवर्तसर्वेषां चेतनाचेतनानां स्वरूपानन्दस्फुरणप्रदतयाऽऽजीवनहेतुभूते सर्वसंस्थे सर्वलयस्थाने बृहन्ते बृहति महति तस्मिन्प्रकृते मायाशबले ब्रह्मचक्रे बृहत्वाद्ब्रह्म चक्ररूपेण निरूपितत्वात्तदेव चक्रं च तस्मिन्ब्रह्मचक्रे हंस आत्मा जाग्रत्स्थूलकार्यकारणससंघातं हत्वा तद्वासनामयं सूक्ष्मकार्यकारणसंघातं गच्छति स्वप्ने तमपि हत्वा सुषुप्तिप्रलयादौ मायामिलितकारणं ब्रह्म गच्छति प्रारब्धकर्मान्ते वर्तमानकार्यकारणसंघातं हत्वाऽविद्याकर्मवशाच्छरीरान्तरं गच्छति विद्यया सर्वबीजभूताविद्यामायालक्षणं तमः सर्वाधिष्ठानसत्यसुखचिन्मात्रात्ममात्रतया हत्वाऽखण्डसत्यसुखचिन्मात्रब्रह्मात्मतया मोक्षं गच्छतीति हंस आत्मा । एवंभूतोऽद्वयसुखसच्चिन्मात्रवपुरात्मा स्वमायातमसा प्राणोपाधिं गमनागमनोत्क्रान्त्यादिनिमित्तभूतं सृष्ट्वा तं भ्रान्त्याऽऽत्मसात्कृत्य क्रियासमर्थः सन्पुण्यपापे कृत्वा तद्वशादनादौ संसारे सुरनरतिर्यगादिनानायोनिषु भ्राम्यते भ्रमति परिभ्रमति । संसारभ्रमणहेतुः क इत्यपेक्षायां जीवपरभेददर्शनमित्याह—पृथगात्मानमिति । महाकाशस्थानीयपरमात्मनः सकाशाद्घटाकाशस्थानीयमात्मानं स्वत एव भिन्नं मत्वा प्रतिबिम्बस्थानीयात्मनः सकाशाद्बिम्बस्थानीयं परमात्मानं च परमार्थतो भिन्नं मत्वा ततः संसारचक्रे परिभ्रमति । योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । उदरमन्तरं कुरुत इति श्रुत्यन्तरेभ्यः । अथवाऽन्वयव्यतिरेकन्यायाभ्यां दृश्यव्यभिचारिभूतदेहेन्द्रियादिभ्यः सर्वसाक्षिणमव्यभिचारिरूपमात्मानं पृथङ्मत्वा प्रेरितारं कारणोपाधिकत्वेन सर्वनि-

१ ख. ग. °त्तरे म° । २ ख. °यादिव° । ३ ख. °खसंविन्मा° । ४ ख. ग. °मणे हे° । ५ ख. जीवाप° । ६ ख. अन्व° ।

यन्तारं परमात्मानं च यतो वा इमानि भूतानीत्युपलक्षणेन सर्वकार्यतान्निर्वाहकानन्तशक्तिभ्यो विलक्षणं सत्यं ज्ञानमानन्दो ब्रह्मेत्यादिस्वरूपलक्षणेन सर्वप्रकृतिभूतमायायाश्च विलक्षणं मत्वा बुद्ध्वा तेनेत्थं तत्पदलक्षितेन सच्चिदानन्दवपुषा ब्रह्मणा शोधितत्वंपदार्थभूतो जीवो जुष्ट एकत्वेन सेवितो विद्यया संसारतद्धेतुविद्यातिरस्करणेन स्वरूपभूतनिरतिशयानन्दाविर्भावेन च प्रीतश्च[1] तत एवमेकत्वापरोक्षादमृतत्वमेति मरणनिमित्तं देहसंबन्धं न पुनः प्रतिपद्यते। तत ईश्वरतो जुष्टस्तेनेश्वरेणैकत्वापरोक्षेणामृतत्वमेतीति[2] वाऽन्वयः ॥ ६ ॥

हंसशब्दनिर्दिष्ट आत्मनि जाग्रत्प्रमुखं सर्वं कल्पितमित्याह—उद्गीतमिति। उदुपरि वेदान्तेषु गीतं प्रतिपादितमेतत्प्रकृतं ब्रह्मोद्गीथमित्येके पठन्ति तस्मिन्पक्षेऽप्येष एवार्थः। अथवा। उदुपरि साध्यसाधनरूपात्सर्वस्मादुपरि गीतं कार्यकारणात्मकसर्वप्रपञ्चशून्यत्वेन प्रतिपादितमित्यर्थः। अत एतत्प्रकृतं वस्तु परममुत्कृष्टं तुश्चार्थे ब्रह्म बृहद्भवति। सांख्यपक्षाद्व्यावृत्तिमाह—तस्मिन्निति। तस्मिन्निष्कलेऽसङ्गेऽविकारेऽनन्ते सुखसंविन्मात्रैकरस[3] आत्मनि त्रयं सत्त्वरजस्तमआख्यं ब्रह्मविष्णुशिवाख्यं जाग्रत्स्वप्नसुषुप्त्याख्यं विश्वतैजसप्राज्ञाख्यं लोकत्रयाख्यं तत्सर्वं रज्ज्वादिषु सर्पादिरिव वर्तते। स्वप्रतिष्ठा स्वस्मिन्कल्पितस्य हिरण्यगर्भजगत्प्रमुखचेतनाचेतनात्मकस्य[4] स्वरूपप्रदत्वात्प्रतिष्ठाऽऽनन्दस्फुरणप्रदत्वाच्च[5] प्रतिष्ठा परं ब्रह्म स्वयं स्वायत्तसिद्धिकत्वात्। अक्षरं च क्षरं सर्वमश्नुत इत्यक्षरं न क्षरतीति वाऽक्षरम्। अत्राऽऽन्तरं ब्रह्मादिपिपीलिकान्ते व्यष्टिसमष्ट्यात्मकत्वेनावस्थिते संसारचक्र आन्तरं सर्पव्याघ्रादौ रज्ज्वादिरिवाऽऽन्तरं सच्चित्सुखापरोक्षस्वभावमात्मानं वेदविदो यथावद्वेदशक्तितात्पर्यविदो विदित्वाऽपरोक्षीकृत्य तत्परा देहेन्द्रियादावात्माभिमानं हित्वा निरतिशयपुरुषार्थरूपे ब्रह्मणि सदात्माभिमानाः सन्तस्तस्मिन्नेव ब्रह्मणि लीना एकीभूताः स्युः। लयशब्दार्थं श्रुतिः स्वयमेव दर्शयति—योनिमुक्ता इति। मुमुक्षुस्वरूपब्रह्मानन्दस्य व्यवधायकमायानिवृत्तिरेव ब्रह्मणि लयः प्राप्तिश्चापि सैवेत्यर्थः ॥७॥

अवस्थात्रयरूपेण सर्वस्याऽऽत्मन्यध्यस्तत्वं मोक्षप्रकारं चोक्त्वेदानीं कार्यकारणरूपेण सर्वस्याऽऽत्मन्यध्यस्तत्वमात्मनः संसारित्वप्रकारं मोक्षप्रकारं च दर्शयति—संयुक्तमेतदिति। संयुक्तं कार्यं कारणेन संयुक्तं क्षरं क्षरतीति क्षर-

१ क. प्रीतः स्वत ए°। २ ख. °तीत्यन्व°। ३ ख. °खसच्चिन्मा°। ४ ख. ग. घ. °र्भप्रमु°। ५ क. °त्वात्स्वप्र°।

माकाशादि । अक्षरं न क्षरतीत्यक्षरं माया प्रकृतिर्महाप्रलयादावपि स्थितत्वाद्व्यक्तमभिव्यक्तनामरूपावस्थापन्नमाकाशादि । अव्यक्तमनभिव्यक्तनामरूपबीजावस्था प्रकृतिरव्यक्तम् । एतत्कार्यकारणरूपेण वर्तमानमिदं विश्वं यत्सर्वं सच्चिदानन्दैकरसवपुरीश्वरः स्वरूपानन्दस्फुरणप्रदतया भरते बिभर्ति । अनीशश्चाऽऽत्मा सुखसंवित्स्वरूप ईश आत्मा मायाधिष्ठानत्वेन मायाच्छन्नत्वात्तद्विलसितद्वैतभ्रमाच्छादितत्वाच्चानीशश्च भवति । अनीशोऽज्ञातेश्वरभाव इत्यर्थः । स्वरूपस्यानपायात् । बुध्यते भोक्तृभावात् । विज्ञानक्रियाशक्तिमद्रूपोऽहंकारो भोक्ता बुद्धीच्छाप्रयत्नसुखदुःखादिकर्ताऽहंकारेणैक्याध्यासलक्षणाद्भोक्तृभावात्तद्धर्मान्कर्तृत्वभोक्तृत्वसुखदुःखादीन्स्वधर्मत्वेन स्वीकृत्याहं कर्ता भोक्ता सुखी दुःखीति बुध्यते । ज्ञात्वा देवम् । अनेकजन्मानुष्ठितनित्यनैमित्तिकजनितपुण्यनिकरैः प्रक्षीणपापस्य शुद्धान्तःकरणस्येश्वराराधनबुद्ध्या सर्वकर्मानुष्ठानेच्छा समुपजायते । ईश्वरसमाराधनबुद्ध्याऽनुष्ठितकर्माहितपुण्यनिचयैरीश्वरध्यानेच्छा समुपजायते । ईश्वरध्यानाहितमहत्तरपुण्येन सर्वकर्मसंन्यासविध्यनुष्ठानेच्छा समुपजायते । सर्वकर्मसंन्यासानुष्ठानजनितमहत्तरपुण्येन शमदमादिबुद्ध्यनुष्ठानेच्छा समुपजायते । शमदमाद्यनुष्ठानजनितमहत्तरपुण्यैः श्रवणमनननिदिध्यासनविध्यनुष्ठानेच्छा समुपजायते । एवमनेकजन्मानुष्ठितपुण्यपरम्परानिचयः प्रक्षीणाशेषपापोऽपास्ततमोमलो योग्योऽधिकारी मुमुक्षुस्तत्त्वदर्शिनं परमकारुणिकं गुरुं प्राप्य तत्संनिधौ तच्छुश्रूषया ब्रह्मचर्याद्यनुगृहीतश्रवणमनननिदिध्यासनानि समभ्यस्य श्रवणमनननिदिध्यासनानुगृहीतश्रुतमहावाक्यादहं ब्रह्मास्मीति देवं ज्ञात्वा साक्षादपरोक्षीकृत्य मुच्यते सर्वपाशैः पाश्यते बध्यतेऽनेनेति कार्यकारणतद्धर्मलक्षणैः पाशैः सर्वैः पाशैर्मुच्यते ज्ञानेन सर्वसंसारपाशबीजाज्ञानतमसश्चिन्मात्रतया दाहात्तन्मूलं सर्वं चिन्मात्रतया लीनं भवतीत्यर्थः ॥ ८ ॥

चेतनोऽप्येकः प्रकृतिश्चैका चेदयं जीवोऽयं परो जीवः किंचिज्ज्ञः परः सर्वज्ञो जीवो नियम्यः परमात्मा नियन्ता जीवः संसारशतकलुषितः सर्वसंसारधर्मविनिर्मुक्तः परमात्मेत्यादिविरुद्धधर्मव्यवहारः कथं सेत्स्यतीत्याशङ्कायामुपाधिभूतमायाकल्पितभ्रान्तिभेदात्सर्वव्यवस्था सिध्यतीत्याह—ज्ञाज्ञाविति । यथा बिम्बप्रतिबिम्बादिसर्वव्यवहारानास्कन्दिते मयूखस्रज्युदकशरावोपाधौ संपृक्ते तत्संपर्ककृतभेदाद्बिम्बप्रतिबिम्बभूतत्वेन द्युस्थः सविता चलनगमनपरिच्छेदादिधर्मरहित उदकपात्रस्थप्रतिबिम्बस्य परिच्छेदचलनगमनादिधर्मभागि-

१ क. °ज्ञातस्वभा° । २ क. ग. भोक्तृत्वाद्बुद्धी° । ३ घ. °कर्त्रोऽहं° । ४ ख. °द्धर्मक° । ५ क. योग्याधि° । ६ ग. पापैर्मु° । ७ क. घ. द्युस्थस° । ग. द्युस्थं चन्द्रे च° ।

त्वादिविरुद्धव्यवहारास्कन्दितत्वं दृश्यते तद्वदत्रापि । कथं ज्ञाज्ञौ द्वौ । बिम्बस्थानीय ईश्वरो ज्ञः सर्वज्ञः प्रतिबिम्बस्थानीयो जीवोऽज्ञः किंचिज्ज्ञः । औपाधिकबिम्बप्रतिबिम्बभेदोऽप्यनादिसिद्ध इत्याह—अजाविति । अजौ जन्मरहितौ । ईशानीशौ बिम्बस्थानीयः परमात्मेशो नियन्ताऽविद्योपहितः प्रतिबिम्बस्थानीयो जीवोऽनीशोऽनीश्वरः । ह्रस्वत्वं छान्दसम् । सुषुप्तिप्रलयादावुपाधेरभावात्तत्र तन्निबन्धनत्वेन जीवपरविभागो न संभवेदतः स्वाभाविकत्वेन जीवपरविभागोऽङ्गीकर्तव्यः सुषुप्त्यादावपि विद्यमानोपाधिसंभवेऽप्युपाधेरानन्त्यात्तन्निबन्धनं जीवानन्त्यमप्येष्टव्यमित्याशङ्क्याऽऽह—अजा ह्येका भोक्तृभोगार्थयुक्तेति । अजा न जायत इत्यजा । एकाऽखण्डा भोक्तुः प्रतिबिम्बस्थानीयस्य जीवस्य दर्पणस्थानीया प्रकृतिर्भोगादिधर्मापादकत्वेन स्वयं मुख्यभोगादिधर्मवती स्थिता चन्द्रचलनादिधर्मापादकत्वेन स्वयं मुख्यचलनादिधर्मभाक्त्वेन स्थितोदकवद्युक्ता चिदात्मन्यध्यस्ता चेत्यर्थः । मायोपाधिसंपर्कतन्निबन्धनभेदादिकल्पना यस्मिन्नविकारेऽनन्ते सत्यसुखसंविन्मात्र आत्मनि सोऽप्यसङ्गसत्यसुखापरोक्षस्वभावतया सदा विद्यत एव संसारैकलिले घटाद्युपाधिसंपर्कतत्कृतभेदादिविरुद्धधर्मादिकल्पना यस्मिन्नाकाशादिमात्रे सोऽपि शुद्धाकाशादिर्विद्यत एव यथा तद्वदित्याह—अनन्त इति । अनन्तोऽद्वितीय आत्मा निरुपाधिकस्वरूपः सर्वकल्पनाधिष्ठानतया विश्वरूपः । अकर्ताऽविकारी हि यस्माद्विद्यते तस्मात्त्रयं बिम्बस्थानीयं परमात्मानं प्रतिबिम्बस्थानीयं जीवं दर्पणाद्युपाधिस्थानीयां मायां प्रकृतिं चैतत्त्रयं यदा सम्यग्दर्शनावस्थायां ब्रह्म विन्दते सत्यसुखचिन्मात्रब्रह्ममात्रतया विन्दते लभते मुमुक्षुस्तदा निर्धूतनिखिलविकल्पपूर्णानन्दाद्वितीयब्रह्मलाभात्कर्तृत्वादिसकलसंसारधर्मविवर्जितो वीतमोहः कृतकृत्योऽवतिष्ठत इति वाक्यशेषः । ब्रह्ममिति च्छान्दसं ब्रह्मेति यावत् ॥ ९ ॥

जीवेश्वरप्रकृतीनामनादित्वं प्रकृतिसंपर्कवशात्सर्वज्ञत्वादिव्यवस्थां जीवेश्वरप्रकृत्यात्मकद्वैतजातस्य निर्धूताशेषविकल्पसत्यसुखसंविन्मात्रतया सम्यग्ज्ञानेन प्रविलयं चोपपाद्येदानीं प्रकृतेरनित्यतां पुरुषस्य नित्यतामुभयोरीश्वरेण नियम्यतां तदेकत्वज्ञानाज्जीवस्य मोक्षं च दर्शयति—क्षरमिति । क्षरं प्रधानं क्षरतीति क्षरं प्रधानं वियत्प्रमुखं सर्वमस्मिन्विवर्तत्वेन प्रधीयत इति प्रधानम् ।

---

१ क. °तिभोग° । २ ख. °ख्याचलनच° । ३ ख. °कैनिव° । ४ क. °रकीलेन प्र° ।

अनादेः स्वतो नाश्यत्वाभावात्पूर्वमन्त्रेऽनादित्वेनोक्तायाः प्रकृतेर्नित्यत्वोक्त्या सद्वैलक्षण्यं सिद्धं पूर्वत्र सम्यग्ज्ञानं विना प्रकृतेर्नाश्यत्वायोग्यतां विवक्षित्वाऽक्षरमिति नित्यत्वमुक्तम् । अत्र सम्यग्ज्ञानेन नाश्यत्वयोग्यतां विवक्षित्वा क्षरमित्यनित्यत्वमुच्यते । अमृताक्षरममृतं च तदक्षरं चेत्यमृताक्षरम् । असङ्गत्वात्प्राणवियोगलक्षणा मृतिर्नास्ति । साक्षित्वात्स्वरूपनाशोऽपि न भवतीत्यमृताक्षरं पुरुषस्वरूपम् । हरोऽद्वितीयत्वात्स्वेन नित्यपरिपीडितद्वैतजातत्वात्सम्यग्ज्ञानफलकारूढः प्रतिभासमात्रशरीरद्वैतजातं तन्मूलाविद्यां च स्वतावन्मात्रतया हरतीति हरः । क्षरात्मानौ क्षरं पूर्वोक्तां प्रकृतिमात्मानं स्वप्रतिबिम्बं जीवाख्यं पुरुषं चेशत ईष्टे । प्रकृतेः स्वरूपस्फुरणप्रदत्वेनाधिष्ठानत्वाद्घटाकाशस्थानीयानां प्रतिबिम्बस्थानीयानां च जीवानां निरुपाधिकचिन्मात्ररूपेण निर्वोढृत्वात्तावीष्ट इत्यभिधीयते । देवश्चिदेकरस एकोऽद्वितीयस्तस्य देवस्याभिध्यानात्सुरनरतिर्यगादिप्रभेदेष्वाकाशादिप्रभेदेषु[2] च स एव स्वरूपप्रदतया कारणत्वेनाऽऽनन्दप्रदतया पोषकत्वेन स्फुरणप्रदतया साक्षित्वेन प्रवर्तत इत्यभितो ध्यानात्कार्यकारणसंघातसाक्षिभूतोऽहं स एवास्मीति योजनात्तत्त्वभावाद्द्वैतभ्रमतन्मूलाविद्यातिरोहितनिरतिशयानन्दमोक्षपुरुषार्थस्वरूपब्रह्मतत्त्वस्य व्यवधायकद्वैतभ्रमस्य तन्मूलाविद्यायाश्च विद्यया दाहान्मुमुक्षोः स्वरूपत्वेन भावादाविर्भावाद्भूयो दृश्यत्वादिहेतुभिर्द्वैतस्य ज्ञानबाधयोग्यत्वलक्षणमिथ्यात्वप्रसाधनादात्मनोऽद्वयत्वानिर्णयेन द्वैतास्कन्दितापरमार्थत्वकल्पनायास्तद्धेतुभूताया मायायाश्च दाहः पूर्वं भूयो ब्रह्मैकत्वापरोक्षेणैकत्वाच्छादकाविद्यातमसो नाशः । ततः स्वासाधारणार्थक्रियासमर्थत्वेनाऽऽकाशादिद्वैतभ्रमकल्पकमायायाश्च दाहः । अन्ते प्रारब्धकर्मान्ते द्वैतप्रतिभासमात्रनिर्वाहकमायालेशस्याप्यप्रतिबद्धशक्तिविद्यया निवृत्तिः । इत्थं विश्वमायानिवृत्तिर्विदुषो भवति ॥ १० ॥

ब्रह्मात्मैकत्वदर्शिनो[3] मोक्षपुरुषार्थसिद्धिप्रकारमाह—ज्ञात्वा देवमिति । ज्ञात्वा देवं प्रकृतं देवमात्मत्वेन ज्ञात्वाऽपरोक्षीकृत्य सर्वपाशापहानिः पाश्यते बध्यतेऽनेनेति रागद्वेषपुण्यपापादिलक्षणः[4] सर्वसंसारहेतुः पाशस्तस्य सर्वस्यापहानिर्दाहो विद्ययाऽविद्यादाहे तन्मूलरागद्वेषदाहः । रागद्वेषदाहे तन्मूलविहितप्रतिषिद्धक्रियादाहः । क्रियादाहे तन्मूलपुण्यपापलक्षणापूर्वदाहः । अपूर्वदाहे तन्निमित्तशरीरान्तरं न प्रतिपद्यत एवेति शरीरसंबन्धनिमित्ते सुखदुःखे नानुभवति । इत्थं क्षीणैः क्लेशैः सम्यग्ज्ञानेन दग्धैः क्लेशैरुपलक्षितस्य ज्ञानिनो जन्म-

---

१ ख. ग. घ. °रत्मानि° । २ क. घ. °र्यक्प्रभे° । ३ क. °र्शिनां मो° । ४ क. ग. घ. °पुण्यापुण्यादि° ।

मृत्युप्रहाणिः । ब्रह्मात्मैकत्वदर्शनादात्मनि कर्तृत्वाद्यारोपणनिमित्ताविद्यादाहेन कर्तृत्वादिदाहात्तन्मूलस्य कर्मणो दाहे सम्यग्ज्ञानात्प्रागिह जन्मनि जन्मान्तरे वाऽनुतिष्ठितस्य सर्वस्य दाहान्निमित्ताभावात्तन्निमित्तशरीरान्तरपरिग्रहलक्षणजन्मप्रहाणिः । अत एव तत्परित्यागलक्षणमृत्युप्रहाणिः । सम्यग्ज्ञानात्सबीजस्य संसारदुःखस्य दाहमुपपाद्येदानीं तस्यैव विदुषः स्वरूपानन्दाविर्भावलक्षणमोक्षपुरुषार्थसिद्धिमाह—तस्येति । तस्य प्रकृतस्य देवस्याभिध्यानादभ्याभिमुख्येनाऽऽत्मत्वेन ध्यानाद्देहभेद आच्छादकाविद्यातत्कार्यलक्षणोपाधिभेदे दाहे तृतीयं विश्वैश्वर्यमाविर्भूतं भवेत्केवलकर्मणा धूमादिमार्गेण प्राप्तव्यचन्द्रलोकैश्वर्यादुपासनेनार्चिरादिमार्गेण प्राप्तव्यब्रह्मलोकैश्वर्याच्च परं तदपेक्षया तृतीयं केवलसम्यग्ज्ञानैकलभ्यं क्रममार्गनिरपेक्षं मोक्षैश्वर्यमाविर्भूतं भवेदित्यर्थः । सकारणसंसारदुःखनिवृत्तिलक्षणं निरतिशयानन्दाविर्भावलक्षणं च मोक्षमुपपाद्य तदुभयं संक्षिप्य दर्शयति—केवल आप्तकाम इति । केवलो विद्यया दग्धाविद्यातत्कार्याशेषसंसारदुःखतयाऽऽप्तकामः काम्यन्त इति कामा आनन्दाः सर्वे कामा आत्मतयाऽऽप्ता अस्येत्याप्तकामः । एतस्यैवाऽऽनन्दस्येतिश्रुत्यन्तरात् । ततः स्वरूपभूतब्रह्मानन्दाविर्भावतिरस्कार्याविद्यां तज्जन्यसंसारदुःखं च विद्यया स्वरूपमात्रतया दग्ध्वा पूर्णानन्दब्रह्मरूपोऽवतिष्ठते विद्वानित्यर्थः ॥ ११ ॥

आत्मतत्त्वस्यैवाज्ञातत्वसंभवात्स[illegible]णप्रमेयतां निरतिशयपुरुषार्थत्वाच्चोपनिषत्प्रमेयतां चेतरस्यासंभाविताज्ञातत्वात्प्रत्यक्षाद्यप्रमेयत्वपुरुषार्थरूपत्वाच्च वेदप्रतिपाद्यत्वाभावाच्च जीवेश्वरादिप्रभेदस्य चिन्मात्रतां चाऽऽह—एतदिति । एतत्प्रकृतं ब्रह्म ज्ञेयं ज्ञानार्हं स्वयंप्रकाशसुखसंवेदनत्वात्संभाविताज्ञातत्वात्पुरुषार्थरूपत्वाच्च नित्यमेव सर्वप्रमाणैर्ज्ञेयं तदेवाऽऽत्मसंस्थमात्मत्वेन नित्यमेव सदा सम्यक्स्थितमथवाऽऽत्मनि कार्यकरणसंघाते बुद्धौ च सम्यक्स्थितं प्रत्यक्त्वेन स्थितमित्यर्थः । नातः परमत आत्मतत्त्वात्परमन्यन्न वेदितव्यं सम्यग्वेदनार्हं न भवति । दृश्याद्दृगन्येतिप्रमाणज्ञानेन प्रतियोगित्वेन दृश्यस्यापि ज्ञेयत्वमङ्गीकर्तव्यमित्याशङ्क्य भेदज्ञानस्य प्रमाणज्ञानत्वाभावात्प्रमाणवेद्यत्वं जडस्य नाङ्गीकर्तव्यं केनापि प्रकारेणेत्याह—किंचिदिति । अनात्मवस्तुनो जडत्वेन हेयत्वादसंभाविताज्ञातत्वाच्च ज्ञेयत्वासंभवो यस्मात्तस्मादात्मतत्त्वमेव सदा ज्ञेयम् । भोक्ता भोक्तारं द्वितीयार्थे प्रथमा कार्योपाधिकं घटाकाशस्थानीयं जीवं भोग्यं दृश्यजातं प्रेरितारं कारणोपाधिकमीश्वरं च मत्वेमं प्रभेदमविद्याम-

१ ख. ग. घ. °वलं स° । २ क. घ. °पेक्षकं मो° । ३ ख. °ज्जसं° । ४ क. घ. °णत्वा° । ५ ग. प्रमाणेनेत्या° । ६ क. घ. °त्याशङ्क्याऽऽह । ७ क. ग. घ. °ज्ञानत्वा° ।

यमेवेति मत्वा तर्कयित्वा सर्वं भोक्तृत्वादिप्रभेदरूपं त्रिविधमेतत्प्रकृतं ब्रह्मेति स्थाणुपुरुषन्यायेन प्रोक्तं प्रकर्षेणोक्तं तात्पर्येणोक्तं वेदान्तेषु । अथवा भोक्ता भोग्यं प्रेरितारं प्रथमार्थे द्वितीया । एतत्त्रिविधं सर्वमस्मिञ्छास्त्रे प्रोक्तं तात्पर्येणोक्तं ब्रह्मेति मत्वा भोक्त्राद्यशेषभेदप्रपञ्चप्रविलापनेन निर्विशेषं ब्रह्म मत्वा बुद्ध्वा कृतकृत्यो भवतीति वाक्यशेषः ॥ १२ ॥

समष्टिव्यष्ट्यात्मककार्यकारणादिषु निरतिशयानन्दात्मतत्त्वस्य गूढतया विद्यमानत्वमोंकाराख्यसाधनेन स्वरूपतयाऽभिव्यक्ततां च दृष्टान्तेनोपपादयति—वह्नेर्यथेति । वह्नेः सर्वगतस्य योनिगतस्यारण्यादिकाष्ठगतस्य मूर्तिः स्वरूपं स्वेन दाहयोग्यारण्यादिकाष्ठतिरस्काराद्यथा न दृश्यते विद्यमानस्यैव तिरस्कारादनुपलभ्यमानत्वं कस्मादविद्यमानत्वादेवानुपलभ्यमानत्वं कस्मान्न भवतीति चोदित आह—नैव च लिङ्गनाश इति । अरण्यादौ वह्निसद्भावस्य लिङ्गाभाव एतदेवं स्यान्नैव च लिङ्गनाशो लिङ्गस्य विद्यमानत्वात् । किं तच्छुष्काश्वत्थसजातीयत्वादि । अत एव तदेव मथ्यते न यत्किंचित् । ननु तत्र वह्नेर्गूढतया विद्यमानत्वान्न तदेव मथ्यते किंतु तस्यैव वह्निजननशक्तिमत्त्वात्तदेव मिथ्यत इति चेत्तदाऽपि वह्निसद्भावोऽङ्गीकर्तव्यः शक्तिसंबन्धेन वह्निसद्भावस्यैष्टव्यत्वात्प्रलयादौ कार्यं कारणमात्रतयाऽऽसीदिति श्रुतिशतैः प्रतिपादितत्वाच्च । स भूय एवेन्धनयोनिगृह्यः । स मथनात्प्राक्काष्ठावयवैस्तिरस्कृतत्वेन विद्यमान एव वह्निर्भूयो भूयो मथनादिन्धनयोनिरिन्धनमेव योनिरिन्धनयोनिस्तस्मिन्योनौ प्राक्स्वतिरस्कारककाष्ठदाहकत्वेन गृह्यो गृह्यत उपलभ्यतेऽग्न्यभिव्यक्तेर्धूमादिलिङ्गं च दृश्यते यथा तद्वोभयं वै प्रणवेन देहे तद्वा तदुभयमिव वाशब्द उपमार्थः । दार्ष्टान्तिकेऽपि स्वदाह्यमायातत्कार्यतिरस्कृतत्वेन विद्यमानसत्यसुखचिन्मात्रात्मस्वरूपं तिष्ठति तत्सद्भावे साक्षित्वनित्यत्वप्रेमास्पदत्वादिलिङ्गं च तदुभयं सम्यग्ज्ञानात्प्राग्विद्यते प्रणवेन प्रणवाख्यसाधनजनितब्रह्मात्मैकत्वविद्यया पूर्वं स्वतिरस्कारकाविद्यातत्कार्यदाहादेहे कार्यकारणसंघातेऽरणिस्थानीय आत्मतत्त्वाभिव्यक्तिस्तदभिव्यक्तेरमानित्वादिलिङ्गं चोभयं विद्वत्सु गृह्यते ॥ १३ ॥

सम्यग्ज्ञानात्प्रागात्मतत्त्वतिरस्कारककार्यकारणसंघातस्याऽऽत्माभिव्यक्तिस्थानस्याऽऽत्मतत्त्वाभिव्यक्तेरुत्कृष्टसाधनप्रणवस्यान्तरङ्गसाधननिदिध्यासनस्य चाधरारण्यादिरूपत्वं निरूपयति—स्वदेहमिति । स्वदेहमरणिं कृत्वा

१ क. घ. °शेषब्र° । २ क. घ. °त्थजा° । ३ ख. °थ्यत इति किं° । ४ ग. °वस्येष्टत्वा° । ५ ख. ग. घ. °खसंविन्मा° । ६ ग. °र्यकर° । ७ ग. °रकाविद्यातत्कार्य° । ८ ग. °नस्य बहिरङ्गसाधनत्वमात्म° । ९ ख. ग. °नत्वं नि° । १० ग. °दिनिर्मथनरू° ।

स्वस्याऽऽत्मतत्त्वस्य तिरस्कारकाविद्यातत्कार्यकारणसंघातलक्षणं[1] देहमधरारणिं कृत्वाऽऽत्मतत्त्वाभिव्यक्तिस्थानं कृत्वा प्रणवं च वेदसारमुत्तरारणिं कृत्वा सम्यग्ज्ञानकारणत्वेन[2] स्वीकृत्य ध्याननिर्मथनाभ्यासाद्ध्यानं निदिध्यासनं तदेव निर्मथनं तस्याभ्यासाद्देवं द्योतनस्वभावं सुखसंविद्रूपमात्मतत्त्वं पश्येदपरोक्षी कुर्याज्जानीयात् । निगूढवत्पित्रादिसंचितमहानिधिमज्ञानाच्चिरकालाभासं[3] ज्ञानेन यथा पश्यति तद्वन्मुमुक्षुः सम्यग्ज्ञानादात्मतत्त्वं पश्यति ॥ १४ ॥

कार्यकारणसंघाते प्रत्यक्त्वेनैवाऽऽत्मदर्शनं न तु तटस्थत्वेन परोक्षतयाऽऽत्मदर्शनं भवेदिति दृष्टान्तेनाऽऽह—तिलेष्विति । तिलेषु तैलं तिलेषु व्याप्य तिरस्कृततया वर्तमानं तैलं यन्त्रनिष्पीडनेनाभिव्यक्तं सर्वत्र तिरस्कृतत्वेन वर्तमानात्मतत्त्वाभिव्यक्तेरुदाहरणम् । दधनीव सर्पिर्दधिनिर्मथनेनाभिव्यक्तं नवनीतं सगुणब्रह्मस्थानीये नवनीतेऽग्निसंपर्कविलयात्सुगन्धितया[4] पुरुषार्थत्वेनाभिव्यक्तं घृतं निर्गुणब्रह्माभिव्यक्तेरुदाहरणम् । आपः स्रोतःसु शुष्कासु नदीषु खननेनाभिव्यक्ता आपस्तापोपशमनकारणभूता आत्मतत्त्वाभिव्यक्तेः सर्वसंसारतापोपशमनहेतुत्व उदाहरणम् । अरणीषु चाग्निः स्वदाह्यारणीषु तिरस्कृतत्वेन व्याप्य स्थितो मथनेन स्वतिरस्कारककाष्ठादिदाहकत्वेनाभिव्यक्तोऽग्निर्मायातत्कार्यतिरस्कृतात्मतत्त्वस्य मथनस्थानीयात्मदर्शनेन तिरस्कारकदाहकत्वेनाभिव्यक्तौ दृष्टान्तः । दधनीवेत्यत्रेवशब्दः प्रत्येकं संबध्यते । एवमात्माऽऽत्मनि गृह्यतेऽसौ । एवं यथाऽयं दृष्टान्तस्तथाऽऽत्मा ।

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्माऽऽत्मनि स्थितः ॥

आत्मनि देहेन्द्रियसंघाते तत्रापि बुद्धौ च गृह्यतेऽभिव्यज्यते श्रवणादिभिः । सत्येन सत्यवदनेन सत्यशब्दोपलक्षितय(श)मकलापेन वा । एनं प्रकृतं स्वमात्मानं[5] तपसा बाह्यान्तःकरणनिरोधलक्षणेन । मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप इतिस्मृतेः[6] । अनु तत्त्वंपदार्थशोधनमनुस्मृत्य[7] पश्यत्यपरोक्षी करोति यो मुमुक्षुरसौ सम्यग्दर्शी । स्वमात्माऽऽत्मनि जनिमद्देहेन्द्रियादिसंघाते[8] सम्यग्ज्ञानेन[9] प्रमेयतया गृह्यत इति प्रमेयज्ञात्रैक्यं दर्शितम् । ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदितिश्रुत्यन्तरात् । आत्मा स्वेन स्वयमेव गृह्यत इत्यर्थः ॥ १५ ॥

---

१ ग. °र्थकर° । २ ग. °नसाधनत्वे° । ३ ख. °लाप्तं । ४ ग. °विलापिते सुग° । ५ ख. °कृतमा° । ६ ग. °तिश्रुतेः । ७ ग. °नुसृत्य । ८ क. ग. घ. °नि देहे° । ९ ख. °ग्ज्ञानप्र° ।

मोक्षसाधनात्मविद्यातत्साधनतपसोः परमात्मैव निमित्तं ताभ्यामभिव्यक्तश्च स एवेति दर्शयित्वा प्रकरणार्थं चोपसंहरति—सर्वव्यापिनमिति । सर्वव्यापिनमध्यात्मादिभेदभिन्नं जगदन्तर्बहिश्च व्याप्य स्थितमात्मानमत एवाऽऽत्मशब्दार्थभूतं क्षीरे सर्पिरिवार्पितं क्षीरे सर्पिरिव सर्वेषु सारत्वेनार्पितमात्मसमर्पकत्वेन स्थितम् । आत्मविद्यातपोमूलमात्मविद्यातपसोर्मूलं निमित्तम् । आत्मविद्यातपसी यस्य मूले अभिव्यञ्जके तदात्मविद्यातपोमूलमिति वा तद्ब्रह्म तत्तच्छब्दार्थभूतं ब्रह्माद्वितीयम् । उपनिषत् । उपाऽऽत्मत्वेन निषन्निषण्णमविद्यां तन्मूलद्वैतभ्रमं च सम्यग्ज्ञानफलकारूढं सत्स्वतावन्मात्रतया दग्ध्वा प्रत्यक्त्वेनावस्थितमित्यर्थः । परमुत्कृष्टं निरतिशयानन्दतयाऽऽविर्भूतं विद्यादित्यध्याहारः । द्विर्वचनमादरार्थमध्यायसमाप्तिद्योतनार्थं च ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य विज्ञानभगवतः कृतौ श्वेताश्वतरोपनिषद्विवरणे प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

परमात्मनस्तपोविद्यामूलत्वमुक्तं तदेवोपपादयन्त्युत्तरे केचन[1] मन्त्राः प्रथमं बाह्यान्तःकरणनिरोधलक्षणतपोनिमित्तत्वमीश्वरस्याऽऽह—युञ्जान इति । युञ्जानो योजयन् । अन्तर्णीतणिजर्थमिदम् । प्रथमं समाध्युपक्रमसमये किं मनः परमात्मनि योजयन्सविताऽध्यात्मादिभेदभिन्नप्रपञ्चप्रसवगुणयुक्तः परमेश्वरः किमर्थं तत्त्वायाऽऽत्मतत्त्वापरोक्षाय धियो मनोविक्षेपहेतुभूतज्ञानेन्द्रियाण्यासुरवृत्तिभ्यो वियोज्य सात्त्विकवृत्तिभिः संयोजयन्नग्नेर्ज्योतिरग्नेरित्युपलक्षणम् । अग्न्यादिसर्वज्योतिषां ज्योतिः । तद्देवा ज्योतिषां ज्योतिरिति[2] श्रुत्यन्तरे च[3] प्रसिद्धं निचाय्य निश्चित्य पृथिव्या अध्याभरत् । पृथिव्या इत्युपलक्षणं पृथिव्यादिपञ्चभूतात्मककार्यकारणसंघातादधि तत्संघाते तत्रापि बुद्धावाभरदाहरत् । तत्पदार्थभूतं ब्रह्मज्योतिः कार्य[4]कारणसंघाते प्रत्यक्त्वेनाभिव्यनक्तीति यावत् ॥ १ ॥

सवितृशब्दवाच्यं मण्डलाधिष्ठातारं परमेश्वरं प्रार्थयित्वा तत्प्रार्थनाफल‧

---

१ ख. केचिन्मन्त्राः । २ क. ख. घ. °ज्योति° । ३ क. ख. घ. च सि° । ४ ग. °र्यकर° ।

माह—युक्तेनेति । सवितुः प्रसादितस्य देवस्य सवेऽनुज्ञायां सत्यां तत्प्रसादात्प्रत्यगात्मन्यैकाग्र्यगुणयुक्तेन मनसा वयं परमेश्वरप्रसादादेव संपन्नशमदमादिसाधनकलापाः सुवर्गेयाय सुवर्गशब्दवाच्यनिरतिशयानन्दाभिव्यक्तिहेतुभूतज्ञानसाधनश्रवणादिकर्मणे शक्त्या परमेश्वरप्रसादाल्लब्धेन बलेन वयं यतामह इति वाक्यशेषः ॥ २ ॥

मुमुक्षूणां[1] विदुषामनुग्राहकत्वं परमेश्वरस्य स्वभाव इत्याह— युक्त्वायेति । युक्त्वाय प्रत्यगात्मानं योजयित्वा केनैकाग्र्यगुणयुक्तेन मनसा देवान्द्योतनस्वभावान्ब्रह्मेन्द्रादीन्स्वर्यतः[2] स्वःशब्दवाच्यनिरतिशयानन्दस्वभावं यतो गच्छतो दिवं द्योतनस्वभावं बृहदद्वितीयं ज्योतिश्चित्प्रकाशं धिया करिष्यतो धियाऽऽविष्करिष्यतो मनसः प्रत्यैक्यप्रावण्यमापाद्य प्रत्यक्प्रवणमनोजनिताहंब्रह्मास्मीतिबुद्ध्याऽद्वितीयसुखसंवित्स्वभावं ब्रह्म प्रत्यक्त्वेनाऽऽविष्करिष्यत इत्यर्थः । सविता सवितृशब्दवाच्यः परमेश्वरः प्रसवात्यनुजानाति तान्मुमुक्षून्देवान्ब्रह्मेन्द्रादयोऽपि परमेश्वरप्रसादलब्धचित्तैकाग्र्यसाध्यब्रह्मात्मैकत्वज्ञानेन कृतकृत्या बभूवुरित्यर्थः ॥ ३ ॥

तस्यैव विद्यातपसोर्निमित्तभूतस्य परमेश्वरस्य मुमुक्षुभिर्महती परिष्टुतिः कर्तव्येत्याह— युञ्जत इति । युञ्जते योजयन्ति प्रत्यक्प्रवणं कुर्वन्ति किं मन उतापि धियो बुद्धीन्द्रियाण्यपि शब्दादिविषयेभ्यः समाहृत्य युञ्जते योजयन्ति स्ववशं कुर्वन्ति । के विप्रा विवेकज्ञानवन्तो ब्राह्मणाः । किमर्थं विप्रस्य प्रा पूरणे देशतः पूर्णस्य बृहतः कालतो वस्तुतोऽपि पूर्णस्य विपश्चितो ज्ञानस्वभावस्य साक्षात्करणायेति वाक्यशेषः । वि होत्रा दधे वि होत्रा ऋत्विगभिधानमेतदिह तत्कर्मसु वर्तते । ऋत्विग्भिर्निर्वर्त्यान्तःकरणवैमल्यहेतुभूताः क्रियाः सर्वा इति यावत् । वयुनावित् । वयुनेति बुद्ध्यभिधानमेतत्सर्वबुद्धिवृत्तिसाक्ष्येक इदेवैक[5] एव सजातीय[6]रहित एवं[7] विजातीयरहितः साक्ष्यद्वितीयो यः पूर्वोक्ताः क्रिया दधे विदधे पूर्वस्य वेरत्रान्वयः । कृतवान्स एव सर्वज्ञोऽद्वितीयः परमेश्वरो जीवरूपेण मोक्षार्थानि कर्माणि करोतीतिभावः । तस्यैवंभूतस्य देव-

१ ग. विविदिषूणाम° । २ ख. °दीन्सुवर्य° । ३ ख. घ. °तः सुवःश° । ४ ग. °त्यक्यप्रवणतामा° । ५ क. °वैकः स° । ६ ग. °यविजातीयरहितसर्वप्रत्ययसा° । ७ क घ. एव वि° ।

स्य द्योतनस्वभावस्य सवितुः स्थावरजङ्गमात्मकस्य प्रसवितुर्मही महती परिष्टुतिर्मुमुक्षुभिः कर्तव्येति वाक्यशेषः ॥ ४ ॥

यथा पूर्वे ब्राह्मणा विद्वांसो बाह्यान्तःकरणप्रणिधानमुखेन ब्रह्म साक्षात्कृतवन्तस्तथाऽहमपि बाह्यान्तःकरणप्रणिधानमुखेन ब्रह्म प्रत्यक्त्वेनापरोक्षी करिष्यामीति मुमुक्षुराहेत्याह—युजे वामिति । युजे समादधे किं ब्रह्म पूर्व्यमनादिसिद्धं प्रत्यगात्मनैकी करोमीत्यर्थः । केन साधनेन वां युवयोर्वाङ्मनसयोर्नमोभिर्वाक्प्रह्वतालक्षणस्तुतिभिर्मनःप्रह्वतालक्षणैकाग्र्यादिभिश्च मनःप्रणिधानं पूर्वमेव प्रपञ्चितम् । इदानीं वाक्प्रणिधानमाह—हे मनोबुद्धी वामहं प्रत्यगात्मनि युजे समादधे । ते नमोभिर्नमस्कारैः सह मम श्लोकश्च पूर्व्यं ब्रह्मोद्दिश्य व्येत्विति वाक्यार्थः । मुमुक्षोर्मम श्लोकः कीर्तिः स्तुतिरीश्वरमुद्दिश्यैतु व्येतु विविधमेतु । पूर्वव्युपसर्गस्यात्रान्वयः । पथ्येव सूरेः प्राज्ञस्य पथ्येव सन्मार्गे वर्तमानं निमित्तीकृत्य कीर्तिरिव विसर्पतु तं च श्लोकं विसृप्तं शृण्वन्त्वाकर्णयन्तु विश्वे सर्वेऽमृतस्य पुत्रा अमृतस्य ब्रह्मणः पुत्रा हिरण्यगर्भादयः । कुत्र स्थिताः । आ ये । आङ उत्तरत्र संबन्धः । ये धामानि स्थानानि दिव्यानि दिवि भवान्यातस्थुरातिष्ठन्ति तत्स्था ब्रह्मणः पुत्रा हिरण्यगर्भादयो मम स्तुतिं शृण्वन्त्वित्यर्थः ॥ ५ ॥

अनेकजन्मानुष्ठितपुण्यनिचयैः प्रक्षीणाशेषपापस्य शुद्धान्तःकरणस्य विरक्तस्य शमदमादिसाधनकलापवत उत्तमाधिकारिणो मुमुक्षोर्मोक्षसाधनमात्मैकत्वज्ञानमुपदिश्य तस्मिन्नयोग्यस्य मध्यमाधिकारिणोऽन्तःकरणशुद्धिद्वारेणाऽऽत्मज्ञानाधिकारसिद्ध्यर्थं योगमुपदिशन्त्युत्तरे केचिन्मन्त्राः । प्रथमं योगं संक्षिप्याऽऽह—अग्निरिति । अग्निर्यत्राभिमथ्यते यत्र मूलाधारेऽग्निमण्डलेऽग्निरभिमथ्यते मूलबीजेन मथ्यते क्षोभ्यते । वायुर्यत्रैव मूलाधारात्सुषुम्नायामध्युपरि चार्काद्रुध्यतेऽवरुध्यते बिसतन्तुनिभाग्निशिखया सह सोमः कलार्कस्थचन्द्रमण्डलं यत्र द्वादशान्ते ध्यातमतिरिच्यतेऽतिशयेन रिच्यते यत्र सुषुम्नायामामूलाधारादमृतं स्रवद्भाव्यते तत्र मूलाधारे द्वादशान्तस्थितचन्द्रमण्डले सुषुम्नायां च संजायते ध्येयवस्तुप्रवणं जायते मनः ॥ ६ ॥

ध्यानप्रकारमाह—सवित्रेति । सवित्रा द्वादशान्तास्थितकलार्केण प्रसवेन सोममण्डलात्सुषुम्नायां प्रसूतामृतेन जुषेत सेवेताधिकारी किं ब्रह्म ध्येयं वस्तु पूर्व्यं मूलाधारे स्थितं तत्र मूलाधारे योनिमग्निमण्डलं ब्रह्मोपस्थानत्वेन कृण-

१ क घ. °ङ्गमस्य । २ ख. पूर्वब्रा° । ३ घ. °तेनं । ४ ग. °मित्तं कृत्यं की° । ५ ग. °दिष्टं त° । ६ ग. °त्रैवं मू° । ७ क. प्रसृता° । ८ ख. योनिं योनिम° ।

वसे कुरुष्व न हि त एवं कुर्वतस्ते तव कलार्केण विलापितचन्द्रमण्डलात्सुषुम्नायां स्रवदमृतेन पूर्तं पूरितं फलितं मूलाधारस्थं ब्रह्म न ह्यक्षिपत्कालक्षेपं न करोति । एवं ध्यातं ब्रह्म शीघ्रं फलं प्रयच्छतीत्यर्थः ॥ ७ ॥

पद्मासनादीनामन्यतममासनं परिगृह्य शरीरस्थापनप्रकाराभिधानपूर्वकं प्रत्याहारमुक्त्वा ताराश्रयणेन संसारसमुद्रतरणं सिध्यतीत्याह—त्रिरुन्नतमिति । त्रिरुन्नतं स्थाप्योरो ग्रीवा शिर इति त्रीण्यङ्गान्युन्नतानि यस्य तच्छरीरं त्रिरुन्नतं यथा भवति तथा शरीरं समं सम्यक्स्थाप्य हृदि हृदयकुहर इन्द्रियाणि सर्वेन्द्रियाणि मनसा सह मनसा साधनेन संनिवेश्य सम्यङ्निवेशयित्वा(श्य) सम्यङ्नियम्येति यावत् । ब्रह्मोडुपेन तारप्लवेन प्रतरेत प्रकर्षेण तरेत प्रणवस्वरूपं तदर्थं परापरंब्रह्म च यथावद्विद्वान्स्रोतांसि सर्वाणि सुरनरातिर्यक्स्थावरादिभेदभिन्नानि संसारस्रोतांसि भयावहानि भयप्रदातॄण्यनेनोपायेन संसारदुःखमहोदधिं प्रतरेदिति योग्याधिकारिणं श्रुतिरनुशास्ति ॥ ८ ॥

प्राणायामप्रकारमाह—प्राणानिति । प्राणान्प्राणादिप्रभेदभिन्नान्वायून्प्रपीड्य प्रकर्षेण मनोधारणमुखेन निरुध्य कुम्भकप्राणनिरोधस्थानत्वेन योगशास्त्रेण प्रसिद्धमूलाधारादौ सोऽधिकारी युक्तचेष्टो नात्यश्नत इत्यादिशास्त्रेणोक्ता चेष्टा यस्य युक्तोपयुक्तोपपन्ना वा चेष्टा यस्य स युक्तचेष्टः क्षीणे प्राणे तत्तत्स्थाननिरोधेन तत्तत्स्थाने क्षीणे तनुत्वं गते वायौ नासिकयोच्छ्वसीत तत्तत्स्थानेषु सम्यङ्निरुध्यानन्तरं प्राप्तनाडीद्वारेणेडया पिङ्गलया वा नासिकापुटेन शनैः शनैरुच्छ्वसीत वायुमुत्सृजेत् । दुष्टाश्वयुक्तमिव दुर्दान्तैरश्वैर्युक्तं वाहं रथं कुशलसारथिरिवैनं विद्वान्बाह्यकरणनिरोधप्रकारं मनोनिरोधप्रकारद्वारेण वायुनिरोधप्रकारं च विद्वान्मनो धारयेत् । यत्र यत्र वायुनिरोधो दृष्टस्तत्र तत्र मनो धारयेताप्रमत्तोऽवहितो भूत्वा यत्र मनस्तत्र वायुरिति वचनात् ॥ ९ ॥

योगानुष्ठानयोग्यं देशमाह—सम इति । समे निम्नोन्नतप्रकाररहिते शुचौ मेध्ये शर्करावह्निवालुकाविवर्जिते शर्कराभिः क्षुद्रपाषाणैर्वह्निना वालुकाभिः सिकताभिश्च विवर्जिते रहिते शब्दजलाश्रयादिभिः शब्दैः प्राणिवादित्रवाय्वादिनिमित्तघोषैर्जलैरतिनिकटवर्तिभिरुदकैराश्रयैर्मण्डपादिभिर्जलादिभिश्च विवर्जिते जलाश्रयादीति ग्राहादिर्नोच्यते । प्रधानविशेषमाह—मनोनुकूल इति । यत्र मनस आनुकूल्यलक्षणमपेक्षितं प्रयोजनं सिध्यति तत्र न तु चक्षुपीडने । छान्द-

१ ख. °परं ब्र° । २ ख. घ. °न्बाह्यान्तःक° । ३ क. ख. घ. °कारेण म° । ४ ग. कारं तद्द्वारे° । ५ क. °दिघो° । ७ ख. °कैश्चाऽऽश्र° । ७ ख. घ. °दिभिर्वो° ।

सो विसर्जनीयलोपः । अग्न्यादिभिरतप्त एवंभूते देशे गुहानिवाताश्रयेण गुहायां निवातस्थानमाश्रित्य प्रयोजयेत् योगं प्रयोजयेत् ॥ १० ॥

योगमभ्यस्यतस्तत्सिद्धिचिह्नान्याह— नीहारेति । नीहारस्तुषारस्तदाकारा प्रथमं चित्तवृत्तिः प्रवर्तते तदनन्तरं धूमवच्चित्तवृत्तिः प्रवर्तते तदनन्तरमर्कवत्प्रवर्तते तदनन्तरमग्निवदाभाति तदनन्तरं वायुरान्तरो बाह्यवायुवत्प्रक्षुभितो बलवान्प्रवर्तते तदनन्तरं खद्योतनिभा चित्तवृत्तिः प्रवर्तते तदनन्तरं विद्युन्निभा तदनन्तरं स्फटिकनिभा तदनन्तरं संपूर्णशशिसंकाशा चित्तवृत्तिः प्रवर्तते । एवं नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनां च रूपसदृशान्येतानि योगिनोऽनुभवसिद्धान्येतानि बुद्धे रूपाणि योगे क्रियमाणे ब्रह्मण्यभिव्यक्तिकराणि ब्रह्माभिव्यक्तिद्योतकानि पुरःसराणि पूर्वरूपाणि लिङ्गानि क्रमेणाऽऽविर्भवन्तीत्यर्थः । अथवा ब्रह्मणि ब्रह्मविषये योगे चित्तवृत्तिनिरोधलक्षणेऽभिव्यक्तिकराणि द्योतकानि ब्रह्मविषयचित्तवृत्तिनिरोधलक्षणयोगस्याभिव्यक्तिकराणीति यावत् ॥ ११ ॥

भूतजयप्रकारं भूतजयफलं चाऽऽह—पृथिव्यप्तेजोनिलख इति । पृथिवीभूतं तन्मण्डलं निवृत्त्याख्यं तच्छक्तिं चाऽऽत्मसाक्षात्कारेणोपास्य तेनोपासनेन तद्वशीकरणे सत्यनन्तरमब्भूतं तन्मण्डलं प्रतिष्ठाख्यं तच्छक्तिं चाहंत्वेन भावयित्वा तेन तद्वशीकरणे सत्यनन्तरं तेजोभूतं तन्मण्डलं विद्याख्यं तच्छक्तिं चाहंतया चिन्तयित्वा तेन तद्वशीकरणे सत्यनन्तरं वायुभूतं तन्मण्डलं शान्त्याख्यं तच्छक्तिं चाभेदेनोपास्य तेन तद्वशीकरणे सत्यनन्तरं वियद्भूतं तन्मण्डलं शान्त्यतीताख्यं तच्छक्तिं चाऽऽत्मभावेन भावयित्वा तेन तद्वशीकरणं कृत्वैकं पृथिव्याम्सु तेजसि वायौ खे च क्रमेण समुत्थिते ध्यानेन तत्तत्प्रयुक्तकार्ययोग्यतया वशीकृते पञ्चात्मके योगगुणे प्रवृत्ते पृथिव्यादितन्मण्डलतच्छक्तीनामुत्तरोत्तरत्रयेण पूर्वपूर्वत्रयं वेष्टितं बुद्धौ तत्सर्वं स्वाभेदेन चिन्तयित्वा तेनोपासनेन पञ्चभूतात्मके योगगुणे भूतपञ्चकस्य यथेष्टविनियोज्यत्वयोग्यतालक्षणे गुणे यस्य योगिनः प्रवृत्ते निष्पादिते तस्य योगिनो योगो ध्यानं तदेवाग्निर्योगाग्निस्तेन ध्यानेन वशीकृत्य पञ्चभूतात्मकं शरीरं प्राप्तस्य तदहमस्मीत्याभिमन्तुरुक्तफलं सिध्यति ॥ १२ ॥

योगसिद्धेः सूचकानि पूर्वभाविलिङ्गानि योगशास्त्रविदोऽपि कथयन्तीत्याह-लघुत्वमिति । स्पष्टार्थः ॥ १३ ॥

---

१ ग. °श्रयणे गु° । २ ख °क्षात्करणेनोपा° ।

एवं योगाभ्यासेन शुद्धान्तःकरणस्य प्रत्यक्प्रवणमनसो योग्याधिकारिणो योगिनो योगं तत्फलं चाऽऽह—यथैवेति। यथैव बिम्बमादर्शादि मृदयोपलिप्तं मृदया मृजया शुद्धिसाधनेन भस्मादिनोपलिप्तम्। जकारस्य दकारः। तेजोमयं पूर्वमेव प्रचुरतेजस्कं सुधान्तं सुधौतं भस्माद्युपलेपनेन ह्युपलिप्तेन भस्मादिमलेन सहापाकृतपूर्वमलं तद्दर्पणादि भ्राजते दीप्यते यथा तद्वा तदिव तद्वदात्मतत्त्वमात्मनस्त्वंपदार्थभूतस्याद्वितीयसुखसंवित्स्वरूपं तत्पदार्थभूतं निजं रूपं तत्त्वं प्रकृतिप्राकृतमलैरनास्कन्दितत्वेन प्रसमीक्ष्याहं ब्रह्मास्मीत्यपरोक्षीकृत्य देही कार्यकरणसाक्ष्येकोऽद्वितीयः कृतार्थ एकत्वदर्शनेनाऽऽविर्भूतनिरतिशयानन्दस्वभावो वीतशोकः प्रध्वस्तसंसारशोकतत्कारणश्च भवते भवति। तद्वत्सतत्त्वमित्यस्मिन्नपि पाठेऽयमेवार्थः। सुधौतमित्यस्मिन्नर्थे सुधान्तमिति च्छान्दसम् ॥ १४ ॥

तत्त्वंपदार्थशोधनद्वारेण जीवपरयोरैक्यमैक्यापरोक्षप्रकारमैक्यापरोक्षान्मोक्षं च दर्शयति—यदात्मतत्त्वेनेति। यदा गुरुमुपसंगम्य तत्संनिधौ तच्छुश्रूषादिपुरःसरश्रवणाद्यनुष्ठानकाल आत्मतत्त्वेन तु तुशब्दोऽवधारणे शोधितत्वंपदार्थेन नित्यप्रेमास्पदसाक्ष्यव्यभिचारिसत्यसुखसंविन्मात्रस्वरूपेण दीपोपमेन दीपः स्वप्रकाश्याद्विलक्षणो दृष्टो यथा तद्वदात्मा स्वदृश्याद्देहेन्द्रियादिसंघाताद्विलक्षणो भवितुमर्हतीति दीपोपमेन स्वदृश्याद्विलक्षणसाक्षिरूपेणैव। इत्थंभावे तृतीया। आत्मनो निजस्वरूपेणैव ब्रह्मतत्त्वं ब्रह्मशब्दवाच्यं मायाशबलं तस्य तत्त्वं सत्यानन्तसुखबोधैकरसमिह कार्यकारणसंघाते हृदयकुहरे युक्तः शमदमादिसाधनसंपन्नः प्रपश्येत्प्रकर्षेण पश्येत्। तत्त्वंपदार्थशोधनद्वारेणाहं ब्रह्मास्मीत्येकत्वमपरोक्षी कुर्यादिति योग्याधिकारिणमनुशास्ति। आत्मतत्त्वेनाभिन्नमेव ब्रह्मतत्त्वं पश्येदित्येवं वाक्यार्थः। शिष्यस्यानुभवप्रकारमनुभवेन मोक्षं च दर्शयति—अजमिति। अजं जन्मरहितं ध्रुवं कूटस्थनित्यं सर्वतत्त्वैर्विशुद्धं कार्यकारणात्मकतत्त्वैः सर्वैरनास्कन्दितं देवं द्योतनस्वभावं ज्ञात्वाऽपूर्वादिलक्षणं चिन्मात्रं स्वात्मतत्त्वेन ज्ञात्वा मुच्यते सर्वपाशैरज्ञानतत्कार्यलक्षणैः सर्वैः पाशैर्मुच्यते विद्यया स्वभावतन्मात्रतया प्रविलीनाविद्यातत्कार्यद्वैतो भवतीत्यर्थः ॥ १५ ॥

---

१ ख. °भ्यासशु° । २ क. ग. °रः । उपलिप्तं ते° । ३ क. °था तद्वदेवाऽऽत्म° । ४ ख ग. °पग° । ५ क. ग. घ. °सरं श्र° । ६ ख. °नफलेनाऽऽत्म° । ७ ख. ग. °टस्थं नि° । ८ ख. °न्मात्रस्वा° । ९ ख. °शैर्विमुच्य° ।

दिक्कालाद्यनवच्छिन्नानन्तसुखबोधवपुष आत्मनो ब्रह्मादिस्तम्बान्तप्राणिभेदेन महदाद्यणुपर्यन्तेन चावस्थानं सर्वान्तरत्वेन प्रत्यक्त्वं चाऽऽह—एषो हेति । एषो ह देव एष प्रकृतो हशब्द एवार्थे देवो द्योतनस्वभावो दिक्कालाद्यनवच्छिन्नानन्ताद्वितीयसुखसंवित्स्वभावः प्रकृत आत्मैव प्रदिशः प्राच्याद्या दिशः सर्वाः प्रत्यन्वनुगतो व्याप्य स्थितः पूर्वो ह जातः कल्पादौ शरीरिभ्यः सर्वेभ्यः पूर्वः प्रथमशरीरी । ह इत्येवार्थे जात उत्पन्नो हिरण्यगर्भरूपेणाप्येष एव जात इत्यर्थः । स उ गर्भे अन्तः सर्वा दिशो व्याप्य स्थितो यो हिरण्यगर्भरूपेण प्रथमशरीरित्वेन जातो यः स उ स एव गर्भे ब्रह्माण्डोदरेऽन्तर्विराड्रूपेणापि वर्तते स एव जातः सूक्ष्मसमष्टिस्थूलसमष्टिकार्यकारणोपाधिकत्वेन हिरण्यगर्भादिरूपेण जातो यः स एव परमात्मा व्यष्टिभूतानन्तकार्य[1]कारणोपाधिकत्वेन व्यष्टिभूतानन्तजीवात्मना जातः । ऐष्यत्कार्यकारणोपाधिकत्वेन जनिष्यमाणोऽपि स एव प्रत्यङ्जनास्तिष्ठाति । अनन्तसमष्टिव्यष्ट्यात्मककार्यकारणोपाधिषु प्रत्यगान्तरत्वेन जना इतिशब्दाभिलेप्यो भूत्वा स एव परमात्मा तिष्ठति सर्वतोमुखः । किं बहुना चेतनाचेतनात्मकत्वेन बहुमुखः स एव स्थितः । हे जना इत्यन्योन्यं संबोधनं वा जनान्प्रति प्रत्यगिति वा । अस्मिन्पक्षे द्वितीयार्थे प्रथमा ॥ १६ ॥

परमात्मैव हिरण्यगर्भादिरूपेण जात इत्युक्तम् । घटाकाशजलचन्द्रन्यायेन तज्जन्म न स्वरूपेणेत्याह—यो देव इति । यो देवो अग्नौ यः प्रकृतो देवः स्वयंप्रकाशचिन्मात्रवपुः परमात्माऽग्नौ शब्दादितन्मात्रपञ्चककार्यत्वेन तत्पञ्चकव्यापिबुद्धौ जले चन्द्रवद्घट आकाशवद्धिरण्यगर्भरूपेणाऽऽविवेश । यो अप्सु यः स्वयंप्रकाशचिदेकरसः परमात्माऽप्स्वप्शब्दोपलक्षितपञ्चीकृतपञ्चमहाभूतकार्यतया पञ्चमहाभूतव्यापिब्रह्माण्डे विराट्शब्दाभिलप्यत्वेनाऽऽविवेश । यो विश्वं भुवनमाविवेश । योऽनन्तसुखबोधवपुरात्मा व्यष्टिभूतजङ्गमरूपकार्यकारणोपाधिषु भुवनशब्दवाच्येष्विन्द्रादिशब्दाभिलप्यत्वेनाऽऽविवेश । भुवनं विश्वं चतुर्दशभुवनं सत्तास्फुरणप्रदत्वेनाऽऽविवेशेति वाऽर्थः । भवतीति भुवनं कार्यं विश्वं सर्वं महदादि सर्वकार्यं सत्तास्फुरणप्रदतयाऽऽविवेशेति वाऽर्थः । य ओषधीषु फलपाकावसायिषु स्थावररूपकार्यकारणोपाधिषु यः सुखानुभूति-

१ ग. घ. °र्यकर° । २ क. एष कार्य° । ३ ग. घ. °र्यकर° । ४ ख. लभ्यो भू° । ५ क. ख. अन्यस्मि° । ६ क. घ °भूतं ज° । ७ क. घ. °वनस° । ८ क. घ. °ति चार्थः । ९ क. घ. °कार्यस°

रात्मौषधिशब्दाभिलप्यत्वेनाऽऽविवेश । यो वनस्पतिषु यः सत्यसुखापरोक्षस्वभाव आत्मा पुष्पं विना फलवत्सु स्थिररूपकार्यकारणसंघातेषु[1] वनस्पतिषु वनस्पतिशब्दाभिलप्यत्वेनाऽऽविवेश । आविवेशेत्यस्य पूर्वोत्तरेष्वनुवर्तनं द्रष्टव्यम् । तत्सृष्ट्वा तदेवानुप्राविशदित्यादिश्रुत्यन्तरात्[2] । तस्मै सर्वान्तरात्मने देवायानन्तसुखसच्चिन्मात्रवपुषे[3] नमो नमः । नमस्कारः सर्वोपद्रवशमनार्थः । द्विर्वचनमध्यायपरिसमाप्त्यर्थमादरार्थं च ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपाद-
शिष्यस्य विज्ञानभगवतः कृतौ श्वेताश्वतरोपनिष-
द्विवरणे द्वितीयोऽध्यायः ॥ २ ॥

=====

अथ तृतीयोऽध्यायः ।

प्रत्यस्तमिताखिलभेदासङ्गाविकारिसुखसंविन्मात्रवपुष आत्मनो मायाविन इव स्वमायया जगदुत्पत्तिस्थितिलयकारणत्वं सर्वनियन्तृत्वमद्वितीयत्वं प्रत्यक्त्वं चाऽऽह—य एक इति । य एको यः स्वायत्तसिद्धिक एकोऽद्वितीयो जालवाञ्जालवज्जालं माया तच्छक्तयो दुर्भेदत्वाज्जीवाख्यमत्स्यस्य बन्धकत्वाच्च तद्वानस्य स्वरूपस्फुरणप्रदत्वेनाधिष्ठानत्वात्तद्वानीशत ईष्ट ईशनीभिर्मायातच्छक्तिभिस्तत्कार्यरूपसमष्टिभिरेव च न तु स्वतोऽविकारित्वात्सर्वाँल्लोकाँल्लोक्यन्त इति लोकास्तान्दृश्यपदार्थान्भूरादिलोकान्प्राणिभेदांश्चेशत ईष्ट ईशनीभिरीशनसमर्थैरुपाधिभिरेव मायात्मकः सन्मायामात्रकः[4] सन्मायातच्छक्तीरीष्टे मायातच्छक्त्यात्मकः संस्ताभ्यां तत्कार्यभूततन्मात्राणीष्टे भूततन्मात्रात्मकः[5] संस्तैस्तव्द्यष्टिरूपपदार्थानीष्टे पञ्चीकृतपञ्चमहाभूतात्मकः संस्तैस्तव्द्यष्टिभूतान्सर्वपदार्थानीष्टे मायावी मायया प्रदर्शितगिरिसमुद्रादीन्हस्त्यश्वव्याघ्रादींश्च स्वमाययेष्टे यथा तद्वत् । परमेश्वरस्य सर्वनियन्तृत्वमुक्त्वा तस्यैव नियम्योत्पत्तिलयहेतुत्वमद्वितीयत्वसिद्ध्यर्थमाह—य एवेति । य एवैकः स एव स्वयंप्रकाशचिन्मात्रवपुरेवेश्वर एकोऽद्वितीय उद्भवे सर्वस्योत्पत्तौ कारणत्वेन स्थितः संभवे सम्यग्भवः संभवः कारणमात्रतया भवः कारणैक्यापत्तिस्तल्लयोत्पत्तौ निमित्तत्वेन स्थितः । य एतद्विदुरमृतास्ते भवन्ति । ये साधनचतुष्टयसंपन्ना एतदेतं

---

१ क. ख. ग. घ. °र्यकर° । २ ख. °दितिश्रु° । ३ ख. ग. °खसंविन्मा° । ४ ख. °कः सन्मायां त° । ५ ग. घ. °न्मात्रकः ।

य इति पूर्वत्र पुंलिङ्गनिर्देशात्सर्वनियन्तारं सर्वोत्पत्तिस्थितिलयकारणं[1] संवित्सुखैकरसमात्मानं स्वतावन्मात्रतया विदुरपरोक्षी कुर्युरमृतास्ते भवन्ति । तेऽपरोक्षीकृतैकत्वा[2] अमृता भवन्ति । विद्यया मरणादिसंसारहेतुभूतामविद्यां स्वतावन्मात्रतया दग्ध्वा नित्यसिद्धब्रह्म[3]रूपपुरुषार्था भवन्तीत्यर्थः ॥ १ ॥

पूर्वमन्त्रोक्तमर्थमेव प्रपञ्चयति दुरवगाह्यत्वात्—एको हीति । एकोऽद्वितीयो हि यस्माद्रुद्रः सर्वं रोदयति संहरति प्रलयादाविति रुद्रो रुजं संसारदुःखं द्रावयतीति वा रुद्रः । तस्मान्न द्वितीयाय द्वितीयभावाय तस्थुः स्थितवन्तः । अद्वितीयसत्यसुखबोधरूपत्वाद्रुद्रस्य[4] तदधीनसत्तास्फुरणत्वान्मायातत्कार्यरूपप्रपञ्चजातस्यानन्तस्य सतो रुद्रस्य सद्वितीयत्वापादकत्वेन कार्यकारणरूपाः सर्वे पदार्थाः स्थातुं न शक्ता इत्यर्थः । द्वितीयाय प्रमाणानि न्यायाश्च न तस्थुरिति वा द्वैतस्याविचारितरमणीयतयाऽविद्यात्मकत्वेन प्रमाणन्यायायोग्यत्वाद्द्वितीयाय प्रमाणन्याया न तस्थुरित्युक्तम् । ईश्वरस्य पदे पदेऽद्वितीयत्वेन प्रतिपादनात्परमार्थतोऽद्वितीयभावप्रतिपादनाद्द्वैतस्य पदे पदे ज्ञानमात्रनिवर्त्यत्वप्रतिपादनाच्च मिथ्यात्वं सिद्धम् । य इमाँल्लोकानीशत ईशनीभिः प्रत्यङ्जनास्तिष्ठतीत्येतत्पूर्वमेव व्याख्यातार्थम् । संचुकोचान्तकाले संचुकोच संकोचयति संहरति । अन्तकाले प्रलयकाले । संसृज्य विश्वा भुवनानि सर्गकाले वियदादिपञ्चमहाभूतानि सृष्ट्वा तद्विन्यासरूपाणि विश्वा विश्वानि भुवनानि संसृज्य सत्तास्फुरणप्रदत्वेन सम्यक्स्रष्टा गोपाः स्थितिकाल आनन्दप्रदत्वेन गोप्ता च भवति ॥ २ ॥

ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां कार्यकरणानी[5]श्वरस्यैव कार्यकरणानी[6]ति प्रतिपादयति—कार्यकरणानि[7] स्वमायया सृष्ट्वा तेष्वनुप्रविश्य जीवशब्दाभिलप्यत्वेनेश्वरस्यैव स्थितत्वात् । विश्वत इति । आब्रह्मस्तम्बपर्यन्तानां प्राणिनां चक्षूंष्यस्येति विश्वतश्चक्षुः । उतापि । उत्तरत्र सर्वत्र समानैव योजना । इतरेन्द्रियाणामप्युपलक्षणमेतत् । सर्वप्राणिनां करणसंयोजयिताऽप्येष एवेत्याह—सं बाहुभ्यामिति । बाहुभ्यां मनुष्यादीन्संधमति संयोजयति । अनेकार्था हि धातवः । सं पतत्रैः पतत्रैः पतनसाधनैः पादैः संधमति । उपलक्षणेनेतरेन्द्रियसंयोजयितृत्वमप्युक्तं द्रष्टव्यम् । अथवा पतत्रैः पक्षैः पक्षिणः संधमति । सर्वेषां स्रष्टाऽप्येष एवेत्याह—द्यावाभूमी इति । द्यावाभूमी उपलक्षणमेतत्सर्वलोकां-

---

१ ख. ग °णं सच्चित्सु° । २ क. °कृततत्त्वा अ° । ग. °कृतत्वादमृ° । ३ ख. °ह्मपु° । ४ क. °तीयः स° । ५ ग. °र्यकार° । ६ ग. °र्यकार° । ७ क. ग. °र्यकार° ।

स्तदन्तर्वर्तिपदार्थांश्च । सर्वाञ्जनयन्नुत्पादयन्देवो द्योतनस्वभाव एकोऽद्वितीयः संधमतीति पूर्वेणान्वयः ॥ ३ ॥

व्यष्टिकरणाधिष्ठातॄणां समष्टिकरणाभिमानिनामग्न्यादित्यादिदेवानामुत्पत्त्यादिहेतुत्वं सर्वकरणव्यापिसमष्ट्यन्तःकरणाभिमानिहिरण्यगर्भोत्पत्तिहेतुत्वमीश्वरस्य मुमुक्षूणामीश्वरात्सम्यग्ज्ञानप्रार्थनां[1] चाऽऽह—यो देवानामिति । यः स्वयंप्रकाशो देवानामग्न्यादित्यादीनां प्रभवश्चोत्पत्तिक्रमात्प्रातिलोम्येन भवो यस्मिन्स प्रभवो लयस्थानमित्यर्थः । उद्भवश्चोद्भवत्यस्मादित्युद्भव उत्पत्तिस्थानमिति यावत् । अनेकार्था ह्युपसर्गाः । विश्वाधिको विश्वश्चासावधिकश्चेति विश्वाधिकः । अधिक उत्कृष्टो निरतिशयानन्दस्वभाव इति यावत् । विश्वस्मादधिक इति वा । अथवा यो देवानां द्योतनस्वभावानामखिलभावानां प्रतिबिम्बलक्षणानामखण्डैभावस्वभात्वादीश्वरो[2] बिम्बतया प्रलयोत्पत्तिहेतुरित्यखण्डैभावस्वभावत्वमुक्तम्[3] । विश्वाधिक इत्यपास्तातिशयानन्दस्वभावत्वमुक्तम् । रुद्रो व्याख्यातमेतत् । देव इति केचित्पठन्ति । महर्षिर्महांश्चासावृषिश्चेति महर्षिः। महान्निरवग्रहमहत्त्वसंपन्न ऋषिः सर्वज्ञो हिरण्यगर्भं जनयामास पूर्वं करणाभिमानिनं[4] हिरण्यगर्भं जनयामासोत्पादितवान् । पूर्वं सर्गादौ सोऽपास्तातिशयानन्दैकरसबोधविग्रहः परमेश्वरो नः शमादिसाधनसंपन्नान्योग्याधिकारिणोऽस्मान्बुद्ध्याऽपवर्गहेतुभूतया शुभया शुभवस्तुविषययाऽपास्तातिशयानन्दैकरसैक्यविषयया संयुनक्तु संयोजयतु ॥ ४ ॥

प्रत्यक्त्वेन निःसङ्गसुखंसंचिन्मात्रैकरसस्वारस्याविर्भावानुशासनं[5] मुमुक्षोराह—या त इति । या श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धा ते सकलनिष्कलतनोस्तव हे रुद्र । सर्वसंसारतापोपशमनहेतुभूताया निष्कलतनोरस्तित्वे रुद्रशब्द एव प्रमाणमित्याह—रुद्रेति । शिवा शुद्धा जडतद्विशेषमलरहिताऽपास्तातिशयानन्दस्वभावा च तनूस्तनुर्निष्कलस्वरूपाऽघोरा प्रसन्ना संसारतापोपशमनरूपाऽपापकाशिनी पापकाशिनी न भवतीत्यपापकाशिनी स्वाभिव्यक्त्या सर्वपापदग्ध्रीत्येतत्पुण्यप्रकाशिनीति वा स्वाभिव्यक्तेः सर्वपुण्यफलत्वादपहतपाप्मादिस्वरूपा वा तया नः साधनचतुष्टयसंपन्नानस्मांस्तनुवा तन्वा निष्कलस्वरूपया शंतमया सुखतमयाऽद्वितीयानन्दस्वरूपया गिरिशंत हे गिरिशंत गिरौ पर्वते कैलासाख्ये स्थितः शं सुखं तनोतीति गिरिशंत गिरिशब्दे वेदान्त

---

१ ख. ग. घ. °र्थनं चा° । २ ख. घ. °ण्डस्वं° । ३ ख. °ण्डस्व° । ४ ख. °रणसमष्ट्यन्तःकरणा° । ५ ख. ग. °खसंविन्मा° ।

एतस्यैवाऽऽनन्दस्येत्यादौ ब्रह्मेन्द्रादीनां सर्वेषां सुखदातृत्वेन प्रसिद्ध इति वा गिरिशंताभिचाकशीहि । अभ्याभिमुख्येन प्रत्यक्त्वेनाभिचाकशी हि प्रकाशस्व । मुमुक्षून्प्रति तव यन्निष्कलं रूपं तेन निष्कलरूपेण त्वं प्रकाशस्वेति यावत् ॥ ५ ॥

घोरां सगुणतनुं प्रति सम्यग्ज्ञानसिद्ध्यर्थं मुमुक्षोः प्रार्थनामाह—यामिषुमिति । यामिषुं शास्त्रेषु सर्वसंहारसमर्थत्वेन प्रसिद्धामिषुं गिरिशंत व्याख्यातमेतत् । हस्ते बिभर्षि धारयसि । अतस्तव उपसंहर्तव्यान्प्रति[1] क्षेप्तुं शिवां शुभां गिरित्र गिरौ स्थितः सन्सर्वं त्रायति रक्षतीति गिरित्रो हे गिरित्र तां सर्वसंहारसमर्थत्वेन प्रसिद्धां कुरु शिवां कुर्विति पूर्वेणान्वयः । मा हिंसीः पुरुषं जगत् । मा हिंसीः । हिंसां मा कार्षीः । किं पुरुषं सम्यग्ज्ञानसाधनभूतकार्य[2]करणसंघातं जगत्सम्यग्ज्ञानैकरणेतिकर्तव्यभूतवेदान्ताचार्यादिकं[3] यावत्सम्यग्ज्ञानेन भवति निष्कलस्वरूपाविर्भावस्तावत्सम्यग्ज्ञानायोग्यत्वेन मा हिंसी रित्यर्थः ॥ ६ ॥

देवस्य निर्गुणं तत्त्वं तज्ज्ञानं तज्ज्ञानान्मोक्षं चाऽऽह—ततः परमिति देवं प्रसाद्यानन्तरं ततो देवप्रसादादेव[4] यथावज्ज्ञात्वाऽमृता भवन्तीत्यन्वयः । कीदृग्भूतं देवं ज्ञात्वाऽमृता भवन्तीत्यपेक्षायामाह—परं ब्रह्मेत्यादिना । परं ब्रह्म निर्गुणं ब्रह्म परमुत्कृष्टं सुखरूपं बृहन्तं कूटस्थं नित्यमद्वितीयमीशमितिविशेष्यत्वात्पुंलिङ्गनिर्देशः । यथानिकायं यथा यथा कार्यकरणसंघातैस्तल्लक्षणं[5] निकायं स्वतो निर्विशेषः संस्तथा तथाऽवगम्यत इति यथानिकायम् । त्रिकोणत्वाद्यवस्थाविशिष्टायोगतवह्निवत्सर्वभूतेषु[6] गूढं ब्रह्मादिस्तम्बपर्यन्तेषु गूढं वियदादिमहाभूतेषु गूढं सर्वविकारिषु च गूढं विश्वस्यैकं[7] परिवेष्टितारं मायावीव व्याघ्रहस्त्यादीन्परिवेष्ट्य स्थितः । मृगतृष्णिकोदकरजतादीन्यूषरशुक्तिकादिः परिवेष्ट्य स्थितो यथा तथा विश्वस्य परिवेष्टितारं परि परितोऽन्तर्बहिश्च वेष्टितारमत एकमद्वितीयमीशं तच्छब्दार्थभूतमेवंरूपमीश्वरं प्रत्यक्त्वेन ज्ञात्वाऽपरोक्षीकृत्यामृता भवन्ति नित्यसिद्धब्रह्मभूता भवन्ति । एकत्वदर्शनेन व्यवधायकाविद्यानाशाद्भवन्तीत्युपचारः ॥ ७ ॥

उक्तार्थप्ररोचनाय मन्त्रदृशां[8] चानुभवं दर्शयित्वा ब्रह्मात्मैकत्वज्ञानादेव कैवल्यसिद्धिर्न साधनान्तराज्ज्ञानसमुच्चितात्केवलाद्वेत्याह—वेदाहमिति । वेद जानाम्[9]

---

१ क. घ. °ति प्रतिक्षे° २ क. °र्यैकार° । ३ ख. ग. °नकार° । ४ क. °देवं य° । ५ ख. ग. °तलक्ष° । ६ क. ग. घ. °योनुग° । ७ ग. एवैक° । ८ ग. °दृशामनु° । ९ ख. °नामि कृ° ।

म्यहं कृतकृत्योऽहमेतं प्रकृतं पुरुषं पुरि शयनात्पुरुषं महान्तमद्वितीयमादित्यवर्णं स्वयंप्रकाशचिन्मात्ररूपं तमसः परस्तात्स्वयंप्रकाशबोधवपुष्ट्वादज्ञानाख्यतमसा वास्तवमुख्यैक्यतादात्म्यसंबन्धासहत्वेन तमसः परस्तादवस्थितं तमेव विदित्वाऽति मृत्युमेति तमेव प्रकृतिप्राकृतैरनास्कन्दितमेव विदित्वा नान्यद्विदित्वा वा सम्यग्ज्ञानार्हतत्त्वान्तराभावात्तं विदित्वैव[1] नाविदित्वा वाऽति मृत्युमेत्यज्ञानलक्षणं मृत्युमत्येति[2] । अतीत्य परमपुरुषार्थरूपं तमेवाऽऽत्मानमेति सर्वलयस्थानत्वादज्ञानतमो मृत्युस्तं सम्यग्ज्ञानफलकारूढः स्वतावन्मात्रतया दन्दहीत्यात्माऽतिमृत्युस्तमतिमृत्युमेतीति वा[3] । नान्यः पन्था विद्यतेऽयनायेति ज्ञानमार्गादन्यो मार्गो न विद्यते श्रुतिस्मृतिपुराणन्यायेष्वयनायापवर्गगमनाय मोक्षप्राप्तय इत्यर्थः ॥ ८ ॥

ब्रह्मात्मैकत्वाविद्याविलसितत्वात्क्रियाकारकादिरूपद्वैतप्रपञ्चस्यैकत्वविषयसम्यग्ज्ञानबाध्यत्वादेकत्वज्ञानमेव मोक्षसाधनं नान्यदित्याह—यस्मादिति । यस्मात्पुरुषात्परमुत्कृष्टमपरमन्यत्किंचिन्नास्ति।अपास्तसमस्तातिशयपूर्णानन्दैकरसत्वात्तस्मात्परमुत्कृष्टं नास्ति तदन्यस्य सर्वस्यैतदविद्याविलसितत्वात्तस्मादपरमन्यच्च[4] नास्तीति । यस्मान्नाणीयो यस्मादणीयोऽणुतरं सूक्ष्मतरं नास्तीति स्वयंप्रकाशचिदेकरसत्वादात्मनस्तदन्यस्य जडत्वेन स्थूलत्वान्न ज्यायोऽस्ति कश्चिन्न ज्यायो महत्तरमपि कश्चित्किंचिन्नास्ति[5] । प्रत्यगात्माधीनसत्तास्फुरणत्वात्तदन्यस्य सर्वस्य वृक्ष इव स्तब्धो निवातदेशस्थो वृक्ष इव स्तब्धोऽविकारी सर्वविकारानास्कन्दित इति यावत् । दिवि तिष्ठत्यखण्डानन्दाभिव्यञ्जकत्वेन[6] द्योतनस्वभावायां पूर्णानन्दाभिव्यञ्जकत्वेन क्रीडारूपायामहं ब्रह्मास्मीतिबुद्धौ प्रमेयत्वेन तिष्ठति । दिवि स्वयंप्रकाशचिदेकरसे स्वे महिम्नि तिष्ठतीति वा । दिवि द्योतनस्वभावे प्रकाशस्वभाव आदित्यमण्डले तिष्ठतीति वा। एकोऽद्वितीयस्तेनेदं पूर्णं पुरुषेण सर्वं स्वर्णादिभी रुचकादिवद्रज्ज्वादिभिः सर्पादिवत्तेन प्रकृतेन पुरुषेण देशतः कालतो वस्तुतश्चानवच्छिन्नेनेदं दृश्यजातं सर्वं पूर्णं सर्वतो व्याप्तमत ईश्वरव्यतिरिक्तं किंचिदपि नास्ति[7] । अत ईश्वरैकत्वज्ञानादेवापवर्गसिद्धिरिति सम्यगेवोक्तम् ॥ ९ ॥

ब्रह्मात्मैकत्वज्ञानवतामेव पुरुषार्थलाभ एकत्वज्ञानहीनानामितरसाधनावलम्बिनां पुरुषार्थलवोऽपि न सेत्स्यति प्रत्युत दुःखमेवेत्याह— तत इति ।

---

१ ग. °त्वैवाति । २ ग. °मति । घ. °मत्यती° । ३ ख. दहतीत्या° । ४ ग. वाऽन्वयः । ना° । ५ ख. घ. °न्यत्किंचिन्नास्ती° । ६ ख. घ. °खण्डचिदाभि° । ७ ख. ग. °नास्तीत्यत ।

यस्मादीश्वरैकत्वज्ञानादेव कैवल्यसिद्धिस्ततस्तस्मादुत्तरतरम् । अथवा सर्पादिव्यापकरज्ज्वादेः सर्पादिबाधेऽपि स्थितत्वादुत्तरत्ववद्रुचकादिव्यापकस्वर्णादे रुचकादिलयेऽपि स्थितत्वादुत्तरत्ववद्भौतिकलयेऽपि भूतानां स्थितत्वादुत्तरत्ववच्च व्याप्यव्यापकभावेन वर्तमानानां प्रकृतिप्राकृतानां हेयभूतानां सर्वेषां सत्तास्फुरणप्रदतया व्यापकः पुरुष उक्तो यतस्तत्तस्मात्प्रकृतिप्राकृतसर्वबाधेऽपि स्थितत्वादुत्तरतरम् । अथवा प्रकृतिप्राकृतानां हेयभूतानां सर्वेषामधिष्ठानत्वेन व्यापको यतस्ततस्तदुत्तरतरमुत्कृष्टतरं यत्तदरूपं करचरणादिरूपहीनं कार्ष्ण्यादिरूपहीनं वा । उपलक्षणभूतेन रूपरसादिना हीनं वा । अनामयं दुःखरहितं संसाररोगशून्यमुक्तविशेषणं तत्पदार्थभूतमीश्वरतत्त्वमेतत्त्वंपदार्थभूतप्रत्यगात्मत्वेन ये साधनचतुष्टयसंपन्ना योग्याधिकारिणो विदुरपरोक्षी कुर्युस्तेऽपरोक्षज्ञानवन्त एकत्वविषयापरोक्षज्ञानात्स्वरूपव्यवधायकाविद्यातत्कार्यद्वैतभ्रमं स्वरूपमात्रतया प्रविलाप्यामृता भवन्ति नित्यसिद्धब्रह्मभूता भवन्ति । अथेति पक्षान्तरे । एकत्वज्ञानमनाश्रित्य साधनान्तराण्यवलम्ब्य ये स्थितास्त इतरे दुःखमेवापियन्ति । उपर्युपरि दुःखमेव प्राप्नुवन्ति न सुखलवमपि ॥ १० ॥

ईश्वरस्याद्वितीयत्वसिद्धये प्रत्यगात्मत्वमेष्टव्यमित्याह—सर्वाननशिरोग्रीव इति । सर्वकार्यकरणानि स्वमायया सृष्ट्वा जलचन्द्रवत्तेष्वनुप्रविश्य जीव इतिनामान्तराभिलप्यत्वेनेश्वरस्यैव स्थितत्वात्सर्वाण्याननानि सर्वाणि शिरांसि सर्वा ग्रीवाश्चास्येति सर्वाननशिरोग्रीवः । ब्रह्मादिस्तम्बपर्यन्तानां सर्वेषामाननादिरस्येति वा विग्रहः । इतरावयवानामप्युलक्षणमेतत् । सर्वभूतगुहाशय आब्रह्मस्तम्बपर्यन्तानां सर्वेषां भूतानां हृदयकुहरे प्रत्यक्त्वेन स्थित इति सर्वभूतगुहाशयः । सर्वव्यापी समष्टिरूपेण स्थितान्सर्वोपाधीन्सर्वतो व्याप्तुं शीलमस्येति सर्वव्यापी स भगवान्समग्रैश्वर्यवीर्ययशःश्रीज्ञानवैराग्याख्या भगा अस्येति भगवान् । तस्मात्सर्वाननशिरोग्रीवत्वात्सर्वभूतगुहाशयत्वात्सर्वव्यापित्वाद्भगवच्छब्दार्थत्वाच्च सर्वगतः सर्वतो गतः सर्वत्वेन गतो वा । अद्वितीय इति यावत् । शिवः । अविद्यातत्कार्यमलरहितत्वात्परिपूर्णानन्दस्वभावत्वाच्च शिवः ॥ ११ ॥

अन्तःकरणशुद्धिपूर्वकज्ञानस्य तत्फलमोक्षस्य चेश्वर एव प्रदातेत्याह—महानिति । महान्देशकालाद्यनवच्छिन्नः प्रभुर्जगदुत्पत्तिप्रवेशस्थितिनियमनसं-

---

१ ग. °सर्वोपाधिलयेऽपि । २ क. ग. घ. °दिही° । ३ ग. °यत्वेन सिद्धस्य प्र° । ४ क. ख. °यंकार° । ५ ग. जले च° । ६ क. ग. °ज्ञानाधिकारस्य । ७ ख. °च्छिन्नत्वात्प्रभु° ।

हारसमर्थः । वै प्रसिद्धौ । पुरुषः पुरि शयनात्पुरुषः स्वभक्तान्स्वाराधनरूपयागादीन्युपासनादीनि च कारयित्वा तैस्तेषां सत्त्वस्यान्तःकरणस्य[1] वैमल्यापादनद्वारेण प्रत्यक्प्रावण्यमापाद्य स्वैक्यज्ञानं[2] प्रति प्रवर्तक एष ईश्वरः सुनिर्मलामविद्यादिमलरहितामिमां श्रुतिन्यायविद्वदनुभवसिद्धां शान्तिं सर्वसंसारतत्कारणोपशमरूपां निरतिशयानन्दाविर्भावलक्षणामपवर्गाख्यां प्रतीशानो मुमुक्षोः स्वरूपत्वेन स्वाविर्भावस्यैव मोक्षत्वात्सम्यग्ज्ञानप्रमेयः सन्स्वैक्यतिरस्कारकसर्वसंसारतत्कारणदाहं[3] कृत्वा मोक्षस्येशान इत्युच्यते । ज्योतिरव्ययो ज्योतिः स्वयंप्रकाशश्चिन्मात्रवपुरव्ययः कूटस्थो नित्यः ॥ १२ ॥

परमेश्वरस्यैव सर्वान्तःकरणोपाधिष्वनुप्रवेशनिबन्धनेन जीवत्वं सम्यग्ज्ञानेन जीवभावव्युदासेन निजरूपेणाऽऽविर्भावं चाऽऽह—अङ्गुष्ठमात्र इति । अङ्गुष्ठमात्रः स्वस्वाङ्गुष्ठमात्रपरिमितेन हृदये मीयत इत्यङ्गुष्ठमात्रः पुरुषः पूर्णत्वात्पुरि शयनाच्च पुरुषः । अन्तरात्मा सर्पादिषु रज्ज्वादिवत्सर्वोपाधिष्वान्तरत्वेन स्थितः सन्सर्वोपाधीनां स्वरूपत्वादन्तरात्मा । सदा जनानामित्यस्य काकाक्षिवत्संबन्धः । जनानां जननादिधर्मवतामुपाधीनां सदाऽन्तरात्मा सदा जनानां हृदये संनिविष्ट इति च । अङ्गुष्ठमात्रत्वं न स्वतः किंत्वङ्गुष्ठपरिमाणहृदयावच्छिन्नत्वादात्मनोऽङ्गुष्ठमात्रत्वमित्याह— हृदये संनिविष्ट इति । सम्यङ्निविष्टः संनिविष्टो हृदयाख्यसूक्ष्मशरीरस्य स्वरूपानन्दस्फुरणप्रदत्वेन निविष्टः[4] । हृदा हृदयस्थबुद्ध्या मनीषा मनें[5] इष्ट इत्यसावेव मनीट् तया मनीषा हृदा मनसा संकल्पात्मकेनाभिक्लृप्तोऽभिप्रकाशितः । मनसा संकल्पितो बुद्ध्या निश्चित इति मनसा बुद्ध्याऽभिप्रकाशित इत्युक्तम् । अथवा हृदा मनीषा हृञ् हरणे हृदा नेति नेतीत्यादिसर्वप्रतिषेधोपदेशेन मनीषा विचारेणाऽऽत्मानात्मविवेकविषयेण मनसा तदुभयजनितसम्यग्ज्ञानाभिक्लृप्तोऽभिप्रकाशितः । ये शमादिसाधनसंपन्ना एतत्प्रत्यक्त्वं[6] सम्यग्ज्ञानेन नान्तरीयकतयाऽविद्यातत्कार्योपाधिं प्रविलाप्य विदुरपरोक्षी कुर्युस्ते सम्यग्दर्शिनोऽमृता भवन्ति जन्ममरणादिसंसारभ्रमहेत्वविद्याबाधामृदता भवन्तीत्युच्यते ॥ १३ ॥

परमेश्वर एव स्वमायया सर्वकार्यकरणानि[7] सृष्ट्वा तेष्वनुप्रविश्य जीवाख्यां लभत इति सर्वेषां कार्यकरणानामीश्वरस्यैव कार्यकरणत्वमीश्वरस्यैव[8][9] स्वतो विशुद्धतां चाऽऽह—सहस्रशीर्षेति । सहस्रशीर्षा सहस्राण्यनन्तानि शीर्षाण्य-

---

१ ग. °स्य नैर्मल्या° । २ ग. स्वैकत्वज्ञानप्रव° । ३ ख. सन्ब्रह्मात्मैक्य° । ४ ख. ग. °विष्टत्वाद्धृदये संनिविष्टः । ५ ख. °नसेष्ट । घ. °नस ई° । ६ ख. °त्यक्त्वं स° । ७ क. ख. °र्यकार° । ८ क. ख. °र्यकार° । ९ क. ख. °र्यकार° ।

स्येति सहस्रशीर्षा पुरुषः पुरि शयनात्पूर्णत्वाच्च पुरुषः । सहस्राक्ष इत्यादावप्येष एव योजनाप्रकारः । स भूमिं विश्वतो वृत्वा स प्रकृतः परमेश्वरः पुरुषो भूमिं भूम्युपलक्षितं भूतभौतिकं सर्वं विश्वतः सर्वतोऽन्तर्बहिश्च वृत्वा व्याप्यात्यतिष्ठद्दशाङ्गुलं तन्मात्रपञ्चकसमष्टिरूपं हिरण्यगर्भं पञ्चीकृतपञ्चमहाभूतसमष्टिरूपं विराड्रूपं चोभयात्मकं दशाङ्गुलम् । अत्यतीत्यासङ्गेऽविकारेऽनन्ते सत्यसुखसंविन्मात्रैकर[1]सत्वेन[2] महिम्न्यतिष्ठत्स्थितवान् । अथवा मायाप्रकृतिं भूतपञ्चकमहंकारचतुष्टयं चैतद्दशाङ्गुलं दशपर्वात्मकमतीत्य व्यवस्थितवान् । अथवा दशेन्द्रियाणि दश दिशो वेत्येवमादीनि दशात्मकानि यानि तानि सर्वाण्यङ्गुल[4]परिमाणोपलक्षितानि परिच्छिन्नानि स्थानान्यतीत्य स्थितवानिति वा । अथवा भूतभौतिकं सर्वमन्तर्बहिर्व्याप्य तदपेक्षं दशाङ्गुलमत्यतिरिच्यातिष्ठद्भूतभौतिकं सर्वमपेक्ष्य दशाङ्गुलं दशगुणमतिरिच्य स्थितवान् । निरवग्रहमहत्त्वसंपन्न इति यावत् ॥ १४ ॥

स भूमिं विश्वतो वृत्वेति पुरुषव्याप्यत्वेनोक्तम् । अत्यतिष्ठद्दशाङ्गुलमित्यतिक्रमेण विषयत्वेन चोक्तं यत्तदिदं सर्वं पुरुषाविद्याविलसितत्वान्निरूप्यमाणे सर्वकल्पनाधिष्ठानपुरुषमात्रमेवेत्याह—पुरुष इति । पुरुष एवेदं सर्वमिति विभक्तत्वात्परिच्छिन्नत्वात्संहतत्वाच्च पुरुषव्यतिरिक्तं रज्जुसर्पादिवदविद्यात्मकमेवेत्युक्तम् । इदमिति दृश्यत्वाद्रज्जुसर्पादिवदविद्यात्मकमेवेत्युक्तम् । यद्भूतं यच्च भव्यमिति भूतभाविवर्तमानात्मकत्वात्स्वप्नप्रपञ्चवदविद्यात्मकमेवेत्युक्तम् । यतोऽविद्यात्मकमेवेत्युक्तम् । ततोऽविद्यात्मकप्रपञ्चे निरूप्यमाणे सर्वकल्पनाधिष्ठानपुरुषमात्रमेवेत्याह—पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति । उतामृतत्वस्येशानः । उताप्यमृतत्वस्य प्रतिभासमात्रसंसारतत्कारणनिवृत्तिलक्षणस्य मोक्षस्येशानः । महावाक्यजनिताहंब्रह्मास्मीति सम्यग्ज्ञानफलकारूढः। सत्यसुखसंविन्मात्रवपुरीश्वरोऽविद्यातत्कार्यसंसारभ्रमनिवर्तकत्वादमृतत्वस्येशान इत्युच्यते । यदन्नेनातिरोहति । यद्दृश्यजातमन्नमद्यते बाध्यते सम्यग्ज्ञानेनेत्यन्नं माया तेन मायाख्येनान्नेनात्यतीत्य वस्तुस्वभावम[6]तिलङ्घ्याद्वितीयवस्तुविपरीतरूपेण रोहति जायते तस्यापि कार्यजातस्य सत्तास्फुरणप्रदत्वेनाधिष्ठानत्वादीशानो नियन्ता परमेश्वर एव । अथवा यत्पुरुषतत्त्वं तन्मायाख्यान्नेनाति स्वविपरीतवियदादिकार्यरूपेण रोहति जायते स एवामृतत्वस्येशान इत्यन्वयः ॥ १५ ॥

१ ख. ग. °रसे स्वे म° । २ घ. °न स्वे म° । ३ ख. ग. मायां प्र° । ४ ग. °लप्रमा° । ५ ग. °पेक्ष्य यद्दशा° । ६ क. ख. ग. °मनति° । ७ क. ख. °तीय व° ।

ईश्वरस्य सर्वकार्यकरणेषु प्रत्यग्रूपेणावस्थानं सर्वात्मकतां चाऽऽह—सर्वत इति । आब्रह्मस्तम्बपर्यन्तानां सर्वेषां तस्यैव पाणिपादा इति सर्वतःपाणिपादं तत्प्रकृतं ब्रह्म सर्वतोक्षिशिरोमुखमित्यस्याप्येवमेव विग्रहः । सर्वतःश्रुतिमच्छ्रवणवल्लोके प्राणिनिकाये सर्वमावृत्य तिष्ठतीति किं बहुना प्रकृतिप्राकृतं सर्वमन्तर्बहिश्च स्वरूपस्फुरणप्रदतयाऽऽवृत्य समन्ताद्व्याप्य तिष्ठति मायावीव स्वमायानिर्मितव्याघ्रहस्त्यश्वादिवत् ॥ १६ ॥

स्वयंप्रकाशचिन्मात्रैकरसस्येश्वरस्य निखिलकार्यकरणेषु प्रत्यग्रूपेणावस्थानं सर्वेन्द्रियविषयेषु साक्षित्वं निःसङ्गतां सर्वनियन्तृत्वादीनि चाऽऽह—सर्वेति । सर्वेन्द्रियगुणाभासं सर्वाणीन्द्रियाणि श्रोत्रादीनि वागादीनि च तद्गुणाः श्रवणादिवचनादितद्वृत्तयः शब्दादिवेदनानि तद्विषयाश्च तद्गुणास्तेषामिन्द्रियाणां तद्गुणानां च सर्वेषामाभासत्वेन भानत्वेनावस्थितं सर्वेन्द्रियविवर्जितं निःसङ्गकूटस्थसंविन्मात्ररसत्वात्परमार्थत इन्द्रियतद्वृत्तितद्विषयैः सर्वैरैक्यतादात्म्यादिसंबन्धशून्यम् । इन्द्रियमिति पूर्वोक्तानामुपलक्षणम् । सर्वस्य प्रभुमध्यात्माधिदैवादिभेदभिन्नस्य सर्वस्य प्रभुं स्वामिनमीशानं नियन्तारं स्वामित्वनियन्तृत्वे अन्योन्येन विनाऽपि भवत इत्युभयोरुपादानं सर्वस्य शरणं सर्वस्याऽऽपदि प्राप्यं रक्षकं वा सुहृन्मित्रवन्मित्रं सर्वावस्थायां हितैकारकम् । सर्वाणि पदानि प्रथमान्तानि नपुंसकानि प्रभुमित्यत्र लिङ्गव्यत्ययो द्रष्टव्यः ॥ १७ ॥

ग्रन्थलाघवाद्बुद्धिलाघवं प्रयोजनमाश्रयणीयमिति न्यायादस्यार्थस्य दुरवगाहत्वादभ्यासस्य तात्पर्यलिङ्गत्वाच्च जीवेश्वरयोरेकत्वं बहुकृत्व उपदिश्यते स्वमायानिर्मितकार्यकरणेष्वनुप्रविश्य जीवभावमुपगतो यः सच्चित्सुखैकरसः परमेश्वरः स एवानेकप्रभेदभिन्नस्य जगतो नियन्तेत्याह—नवद्वार इति । देहस्य हेयत्वेनोपेक्ष्यत्वसिद्ध्यर्थमाह—नवद्वारेति । शिरसि सप्त द्वाराणि द्वाववाञ्चावेतानि नव द्वाराणि यस्मिन्नवद्वारे पुर उपभोगस्थाने शरीरेऽनुप्रविश्य देही पुराभिमानी सन्हंसो जाग्रदभिमानं हत्वा स्वप्नोपाध्यभिमानं गच्छति तमपि हत्वा सुषुप्तिं गच्छति तामपि सम्यग्ज्ञानेन हत्वा तुर्यं गच्छतीति हंसः परमात्मा लेलायते स्वमाययैव ज्ञानक्रियाशक्तिमत्सूक्ष्मशरीरं सृष्ट्वा तदभिमानी सन्पुण्यपापे कृत्वा तत्परवशो भूत्वाऽवस्थात्रयेष्विहलोकपरलोकेषु ब्रह्मादिस्थावरान्तेषु योनिभेदेषु च लेलायते चलति संसरति बहिरसङ्गत्वात्तेभ्यः

१ ख. ग. °स्त्यश्वरथादि° । २ ख. ग. °न्योन्यं वि° । ३ ख. °स्याऽऽदि° । ४ ख. ग. °तकरम् । ५ क. घ. °लिङ्गाच्च । ६ क ग. °नोपदेक्ष्य° । ७ ग. °नं हित्वा । ८ ग. °पि हित्वा ९ ग. चरति ।

सदा बहिरेव वश्यखण्डमायोपाधिकत्वेन महाकाशस्थानीयः परमेश्वरो वश्यस्य वशे वर्तत इति वशी नियन्ता सर्वस्य महदादिभेदभिन्नस्य लोकस्य जनस्य सर्वस्य भूरादिलोकस्य वा स्थावरस्य चरस्य च स्थिरजङ्गमात्मकप्राणिभेदस्य च वशी ॥ १८ ॥

स्वतः सर्वकरणशून्यस्यैवेश्वरस्य स्वाविद्यया पाण्यादिकरणवत्त्वं तद्व्यापारवत्त्वं सर्वज्ञतामनन्यवेद्यतामद्वितीयतां चाऽऽह—अपाणिपाद इति । निर्विशेषत्वादीश्वरः स्वयमपाणिपादः पाणिपादा अस्य न विद्यन्त इत्यपाणिपादः । तथाऽपि जवनो ग्रहीता च ज्ञाताज्ञातसाक्षित्वेन तत्र तत्र गच्छतीव भातीति जवनः । ईश्वरसत्ताव्यतिरेकेण सर्वस्य सत्ताभावात्स्वाविद्याकल्पितस्य सत्ताप्रदत्वेन स्वाभेदेन ग्राहकत्वादग्रहीता च । इतरकर्मेन्द्रियाणामप्युपलक्षणमेतत् । पश्यत्यचक्षुः स्वयं चक्षुःशून्योऽपि चक्षुस्तद्वृत्तिं तद्विषयं च स्वरूपानुभवेन पश्यति स शृणोत्यकर्णः स्वतः श्रोत्रहीनोऽपि श्रोत्रतद्वृत्तितद्विषयान्स्वरूपानुभवेन शृणोतीत्युच्यते । इतरेन्द्रियाणामप्युपलक्षणमेतत् । स वेत्ति वेद्यं किं बहुना सोऽखण्डस्वयंप्रकाशचिदेकरसः परमात्मा वेत्ति जानाति वेद्यं वेदनार्हं जडं तद्विशेषरूपं सर्वं स्वसंनिधिमात्रेण जानाति ग्राहकत्वेन प्रसिद्धचक्षुरादीनामप्यन्यो ग्राहक इष्टश्चेत्तस्याप्यन्यो ग्राहक एष्टव्यस्तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्था स्यादतो न किंचित्सिध्येदित्याशङ्क्य मनश्चक्षुरादीनां ग्राहकत्वान्न ग्राहकान्तरापेक्षा किंतु दृश्यत्वादीश्वरस्य तु स्वयंप्रकाशचिदेकरसत्वात्सर्वसाक्षित्वाच्च न तस्य ग्राहकान्तरापेक्षेत्याह—न च तस्यास्ति वेत्तेति । तं प्रकृतं सर्वज्ञमग्र्यमग्रे भवं सर्वाधिष्ठानत्वेन सर्वकारणत्वेन च सर्वजगत्पूर्वसिद्धं कालतो देशतोऽनवच्छिन्नमिति यावत् । सर्वेषां प्रधानत्वाद्वाऽग्र्यं पुरुषं पुरि शयनाद्देशतः पूर्णत्वात्पुरुषं महान्तं स्वव्यतिरिक्तवस्त्वभावाद्वस्तुतोऽनवच्छिन्नमित्थमाहुर्वेदान्ता ब्रह्मविदश्च ॥ १९ ॥

परमात्मनोऽद्वितीयत्वं प्रत्यक्त्वेनावस्थानमेकत्वज्ञानान्मोक्षं ज्ञानाधिकारिणं चाऽऽह—अणोरिति । अणोरणीयान्सूक्ष्मादपि सूक्ष्मतरः । महतो महीयान्महत आकाशादेरपि महत्तरोऽद्वितीयोऽणिमेत्यर्थः । आत्मा ।

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ।

---

१ ग. °स्य दृश्यजातस्य च स° । २ ख. ग. सत्त्वाभा° । ३ क. घ. श्रोत्रादिही° । ४ ग. °याणां स्वरू° । ५ क. घ. °दीनामप्यन्यग्रा° ।

गुहायां सूक्ष्मशरीराख्यगुहायां निहितो निविष्टः प्रत्यक्त्वेन स्थित इत्यर्थः। अस्य चक्षुरादिकरणग्राह्यत्वेन संनिहितस्य जन्तोर्जनैनधर्मयुक्तस्यै स्थूलशरीरस्य गुहायामित्यन्वयः। तं प्रत्यगात्मानमक्रतुं विषयभोगसंकल्परहितं स्वतोऽसंसारिणमित्यर्थः। पश्यत्यपरोक्षी करोति। केन रूपेण महिमानं निरवग्रहमहत्त्वं ब्रह्मशब्दार्थमिति यावत्। ईशं सर्वतो निरपेक्षं त्वंपदार्थभूतं प्रत्यगात्मानं तत्पदार्थभूताद्वितीयेश्वरत्वेन यदा पश्यति तदा वीतशोकः शोकादिसंसारशून्यो भवतीत्यर्थः। कुतः साधैनेन पश्यति धातुः प्रसादाज्जातावेकवचनम्। इन्द्रियाणि धातवः शरीरस्य धारणात्तेषां प्रसादाद्विषयरूपदुरन्तसूनास्थानैस्तेषामनाकृष्यमाणत्वलक्षणान्मनसः प्रत्यक्प्रावण्यलक्षणाच्च प्रसादात्पश्यति ॥ २० ॥

उक्तमर्थं द्रढयितुं मन्त्रदृगनुभवमाह—वेदाहमिति। वेद जानेऽहं मन्त्रद्रष्टाऽऽचार्यपदारूढ एतं पूर्वोक्ताध्याभ्यायामनेन च प्रतिपादितमजरमपक्षयरहितं पुराणं पुराऽपि नवमिति पुराणं जन्मवृद्ध्यादिरहितमजरं पुराणं कूटस्थनित्यमिति यावत्। सर्वात्मानं सर्वश्चासावात्मा च सर्वेषामात्मा स्वरूपमिति वा सर्वात्मा वस्तुतोऽनवच्छिन्न इति यावत्। तं सर्वात्मानं सर्वगतं सर्वव्यापिनं व्यापिना व्याप्यं स्वतन्त्रं न भवति किंत्वेतत्कार्यमित्याह—विभुत्वादिति। आकाशादिविविधकार्यरूपेण भवतीति विभुस्तस्मात्सर्वगतमित्यन्वयः। जन्म निरोधं प्रवदन्ति यस्य जगज्जन्म जगन्निरोधं संहृतिं च यस्य परमेश्वरस्य कर्मेति ब्रह्मवादिनस्तत्त्वदर्शिनः। हि प्रसिद्धौ। प्रवदन्ति नित्यं महाप्रलयमहासर्गेऽवान्तरप्रलयावान्तरसर्गे सुषुप्तिप्रैबोधमध्ये च। अथवा जन्मनिरोधं जन्मनो निरोधं जन्माभावं यस्य वदन्तीति तमहं वेदेत्यन्वयः। स एव मया प्रतिपादित इत्यभिप्रायः ॥ २१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपाद-
शिष्यस्य विज्ञानभगवतः कृतौ श्वेताश्वतरोपनिष-
द्विवरणे तृतीयोऽध्यायः ॥ ३ ॥

अथ चतुर्थोऽध्यायः।

ग्रन्थलाघवाद्बुद्धिलाघवं प्रयोजनमाश्रयितव्यमितिन्यायादभ्यासस्य तात्पर्यलिङ्गत्वादस्यार्थस्य दुरवगाह्यत्वाच्च पुनः पुनः प्रतिपादनं क्रियते चतुर्थाध्याय

१ ग. °ननादिध°। २ ग. स्य श°। ३ ग. °धनात्पश्य°। ४ ख. °प्रलयबो°।

ईश्वरात्सम्यग्ज्ञानप्रार्थनं तत्त्वंपदार्थशोधनमुखेनैकत्वप्रतिपादनं द्वैतस्य मायाप्रकृतिकत्वप्रदर्शनेन मिथ्यात्वं व्यावर्ण्येश्वरस्याद्वितीयत्वप्रतिपादनं सम्यग्ज्ञानान्तरङ्गसाधनं प्रदर्शनं च प्रवर्तते तत्र प्रथमं तावदीश्वरस्वरूपप्रतिपादनेन मुमुक्षोः परमेश्वरात्सम्यग्ज्ञानप्रार्थनमाह—य एक इति । यः स्वयंप्रकाशचिदेकरस एकोऽद्वितीयः । अवर्णो वर्ण्यतेऽनेनेति वर्णो नाम तेन शून्यः । वर्ण्यत इति वर्णं रूपं तेन शून्यो नामरूपशून्य इत्यर्थः । बहुधाशक्तियोगाद्बहुप्रकारकार्यविषयमायाशक्तियोगाद्वर्ण्यन्तेऽनेनेति । वर्णाञ्शब्दान्वर्ण्यन्त इति वर्णान्रूपाण्यनेकाननेकप्रकाराञ्छब्दार्थानिति यावत् । निहितार्थो यस्य स्रष्टव्यविषयेक्षणे निहितो निक्षिप्तोऽर्थः । अर्थ्यत इत्यर्थोऽभिधेयं रूपम् । अर्थ्यतेऽनेनेत्यर्थोऽभिधानं स निहितार्थो दधाति करोति व्याकरोति पूर्वं स्वेक्षणेन नामरूपव्याकरणं कृत्वा पश्चाद्बहिर्व्याकरोतीत्यर्थः । वि चैति चान्ते विश्वमन्ते संहारकाले व्येति च । अन्तर्भावितण्यर्थोऽयं शब्दः । विगमयति विश्लेषयति सर्वं स्वात्मन्युपसंहरति च । आदावित्यस्य दधातीत्यनेन पूर्वेण संबन्धः । चकारस्यापि तत्र संबन्धो द्रष्टव्यः । आदौ सर्गप्रमुखे दधाति चेत्यन्वयः । जगदुत्पत्तिस्थितिप्रलयकारणत्वधर्मेणोपलक्षितो यः स देवो द्योतनस्वभावः स्वयंप्रकाशोऽखण्डचिदेकरस इति यावत् । स नो बुद्ध्या शुभया संयुनक्तु । स एव देवो नोऽस्मान्नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागशमदमादिसाधनकलापमुमुक्षुत्वाख्यसाधनचतुष्टयसंपन्नान्बुद्ध्याऽहं ब्रह्मास्मीत्यध्यवसायात्मिकया शुभया नान्तरीयकतया संसारतत्कारणनिवर्तकत्वेन तत्तिरोहितानन्दाभिव्यञ्जिकया संयुनक्तु संयोजयतु ॥ १ ॥

स्वमाययाऽऽधिदैविकोपाधीन्समष्टिरूपान्सृष्ट्वा तेष्वनुप्रविश्याग्न्यादित्याद्याख्यां लब्ध्वा स्थितोऽपीश्वर एवेत्याह—तदेवेति । तदेवेश्वरतत्त्वमग्निसूर्यवायुचन्द्रादिरूपेणापि स्थितम् । उ अपि । अस्य सर्वत्रान्वयो द्रष्टव्यः । तदेव शुक्रं रोचिष्मन्नक्षत्रमण्डलं तेन रूपेणापि तदेव स्थितं शुक्रमितिपाठे विराड्रूपेणापि तदेव स्थितमिति द्रष्टव्यम् । तद्ब्रह्म हिरण्यगर्भरूपेणापि तदेव स्थितम् । तदापोऽबभिमानिदेवतारूपेणापि तदेव स्थितम् । तत्प्रजापतिर्हिरण्यगर्भरूपेणापि चतुर्मुखविग्रहेण तदेव स्थितम् । एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इत्यादिश्रुत्यन्तरात् । अग्निर्वाक्समष्टिरादित्यश्चक्षुःसमष्टिर्वायुः प्राणसम-

---

१ ख. प्रव° । २ ग. तेनापि शू° । ३ क. °वाग्वाख्यं च° ।

ष्टिश्चन्द्रमा मनःसमष्टिः शुक्रं विराट् स्थूलसमष्टिर्ब्रह्म हिरण्यगर्भोऽन्तःकरणसमष्टिः । आपो जिह्वेन्द्रियसमष्टिः । प्रजापतिरुपस्थेन्द्रियसमष्टिः । एतदग्न्यादिसमष्टिग्रहणमितरसमष्टीनामप्युपलक्षणं द्रष्टव्यम् ॥ २ ॥

स्वमायाशक्त्या व्यष्टिभूतान्निखिलकार्यकरणोपाधीन्सृष्ट्वा तेषु घट आकाशवज्जले चन्द्रवच्च प्रविश्य तत्तदाख्यां लब्ध्वा स्थितोऽपीश्वर एवेत्याह—त्वं स्त्रीति । त्वमेव स्त्रीपुंनपुंसकरूपेणावस्थितः संस्तत्तदाख्यां लब्धोऽसि । उत वा कुमारकुमारीरूपेणापि स्थितोऽसि जीर्णः परिणतवया वलीपलिताद्युपलक्षितः सन्करकलितेन दण्डेनावलम्बनभूतेनेतस्ततो वञ्चसि परिभ्रमसि त्वमेव । किं परिमितगणनेन त्वमेव विश्वतोमुखः सर्वतोमुखो जातोऽसि । हे परमेश्वर त्वमेव स्वेच्छया नानाविधाकारेण मायया जात इव लक्ष्यस इत्यर्थः ॥ ३ ॥

तिर्यगादिरूपेणापीश्वरस्यैवावस्थानमाह—नील इति । एवं स्वमायया तिर्यक्कार्यकरणानि सृष्ट्वा तेष्वनुप्रविश्यायःपिण्डानुगतवह्निवत्तद्रूपं भजित्वाऽवस्थितस्त्वमेवेत्याह—नीलः पतङ्गो नीलः कृष्णः पतङ्गः पक्षी भ्रमरादिः सोऽपि त्वमेव हरितः शुकादिः सोऽपि त्वमेव लोहिताक्षो रक्ताक्षः पक्षी सोऽपि त्वमेव तडिद्गर्भो मेघः सोऽपि त्वमेव ऋतवो वसन्तादयः षट् तेऽपि त्वमेव समुद्रा लवणाद्याः सप्त तेऽपि त्वमेव । अनादिमदादिमन्न भवतीत्यनादिमत्कालतोऽनवच्छिन्नमित्यर्थः । तदपि त्वमेव । त्वमिति सर्वत्र संबध्यते । विभुत्वेन । इत्थंभावे तृतीया । देशतोऽनवच्छिन्नत्वेनापि त्वमेव वर्तसे विभुत्वेन वर्तमानं यत्तदपि त्वमेवेति वा यतो जातानि भुवनानि यतो यस्माज्जातान्युत्पन्नानि भुवनानि भूरादीनि विश्वा विश्वानि समस्तानि भुवनानि तत्त्वं नीलादिरूपेण वर्तस इत्यन्वयः । यतो जातानि भुवनानि तदपि त्वमेवेति वा सर्वोपादानत्वात्स्वरूपतोऽप्यनवच्छिन्नत्वम् । अनादिमदिति कालतोऽप्यानन्त्यमुक्तं विभुत्वेनेति देशतोऽप्यानन्त्यं यत इति स्वरूपानन्त्यम् ॥ ४ ॥

इदानीं तेजोबन्नलक्षणां प्रकृतिं छान्दोग्योपनिषदुक्तां निखिलप्रपञ्चस्य तद्विवर्ततामीश्वराभिन्नप्रकृतिविवर्तरूपशब्दादिषु विषयेष्वसंयोगायाऽऽत्मनस्तस्याः संसारकारणतां तन्निवृत्तेर्मोक्षहेतुतां चाऽऽह—अजामिति । अजां न

---

१ क ख. शुक्रं वि° । २ ख. ग. °मायया । ३ ग. °वचानुप्र° । ४ ख. °स्ततः परिभ्रमन्वचति त्व° । ५ क. ख. °ति च य° । ६ क. ख. °न्छिन्नम् । ग. °च्छिन्नः । अ° ।

जायत इत्यजा तां मूलप्रकृतित्वाज्जन्मरहितामित्यर्थः । एकां सर्वं व्याप्याखण्डत्मकत्वादेकां लोहितशुक्लकृष्णां तेजः सृष्ट्वा तदवस्थापन्नत्वाल्लोहिताम् । अपः सृष्ट्वा तदवस्थापन्नत्वाच्छुक्लाम् । अन्नशब्दवाच्यां पृथ्वीं सृष्ट्वा तदवस्थापन्नत्वात्कृष्णामथवा लोहितां रजआत्मिकां शुक्लां सत्त्वात्मिकां कृष्णां तमआत्मिकामेवं लोहितशुक्लकृष्णाम् । पुनरपि तामेव विशिनष्टि—बह्वीरिति । बह्वीरनेका विभक्तत्वात्कार्यरूपाः प्रजाः प्रविभक्तरूपेण जायन्त इति प्रजाः कारणात्मकत्वेनाविद्यमानस्यासतो जन्मासंभवादुत्पत्तेः प्रागविद्यमानं न जायते किं तर्हि कारणात्मना विद्यमानमेव प्रविभक्तरूपेण व्यज्यते । अतः प्रजा इत्युक्तम् । ताः सृजमानामुत्पादयन्तीं सरूपाः समानरूपाः स्वेन लोहितशुक्लकृष्णात्मकत्वेन समानरूपाः सत्त्वरजस्तमआत्मकत्वेन वा समानरूपाः सृजमानामित्यन्वयः । अजो जन्मरहितो हि यस्मादेकोऽनादिकालप्रवृत्ताविद्याकामकर्मपाशपाशितः क्षेत्रज्ञो यस्मात्प्रकृतिविवर्तत्वात्प्रकृत्यात्मकत्वाच्छब्दादिविषयावस्थापन्नां प्रकृतिं जुषमाणः सेवमानस्तन्निमित्तभोगेषु प्रीयमाणश्चानुशेते स्वयमविकार्यसङ्गसुखैसंविन्मात्रैकरसः परमात्मरूपः स्वतः सर्वसंसारधर्मानास्कन्दितः प्रकृतौ तद्विवर्तान्नमयादिपञ्चकोशेषु जले चन्द्रवदनुप्रविश्य तद्धर्मान्स्वधर्मत्वेन स्वीकृत्य प्रकृतिप्राकृतांश्चानुसृत्य शेते वर्तते जहाति त्यजति नाशयत्यधर्मं त्यजतीतिवत्सम्यग्ज्ञानेन चिन्मात्रतया बाधत एनां सर्वस्य मूलकारणभूतां मायाख्यां प्रकृतिं भुक्तभोगां भुक्तः संसारभोगो यया सा भुक्तभोगा तां भुक्तभोगां विकारित्वादियमेव संसारभोगकर्त्री । आत्मा निःसङ्गसुखसंविन्मात्रैकरसत्वान्न भोगकर्ता चलनादिधर्मशून्ये मयूखस्रजि चलनादिधर्मयुक्तमुदकं चलनाद्यारोपणनिमित्तं यथा तद्वत्संसारधर्मानास्कन्दितेऽसङ्गेऽनन्तसुखसंविन्मात्रैकरस आत्मन्यध्यस्ता सती सर्वसंसारारोपणनिमित्तानर्थरूपाऽतस्तां संसारारोपणनिमित्तामनर्थरूपां सम्यग्ज्ञानेन नाशयत्यजः परमात्मरूपत्वान्न जायत इत्यजोऽन्यः प्रकृतितद्विकारसाक्षित्वात्तेभ्योऽन्यः । अहं ब्रह्मास्मीत्यपरोक्षीकृतत्वात्प्रकृतितद्विकाराभेदाभिमानिनश्चाज्ञानिनोऽन्यः । अहं ब्रह्मास्मीत्येकत्वापरोक्षेण विद्वान्मूलप्रकृतिं स्वतावन्मात्रतया दहतीत्यर्थः ॥ ५ ॥

प्रत्यस्ताखिलभेदो निर्विशेषसुखसंविद्रूपात्माऽखण्डाविद्योपाधौ जले मार्तण्डवदनुप्रविश्य तदुपाधिपरिकल्पितबिम्बप्रतिबिम्बभेदं गत्वा बिम्बरूपेण संसा-

१ ख. ग. °त्यजां मू° । २ ख. °सव्या° । ग. सर्वव्या° । ३ क. वा रोहि° । ४ क. °खस. चिन्मा° । ५ ख. ग. °तेऽनुव° । ६ ग. °मार्थरू° । ७ ग. °कृतैकत्वा° । ८ ख. °कारभे° । ९ क. घ. °सारान°।

रदोषानास्कन्दितस्वयंप्रकाशानवच्छिन्नस्वरूपसंविदा सर्वज्ञतया वर्तते द्युस्थबिम्बभूतभास्करश्चलनादिधर्मशून्यनिर्मलप्रकाशरूपेण सर्वप्रकाशकत्वेन वर्तते यथा तद्वदुपाधिभूताविद्यापक्षपातिप्रतिबिम्बस्वरूपेणोपाधिधर्मान्स्वधर्मत्वेन स्वीकृत्य पापादिमलकलुषिततत्फलभोक्तृत्वेन संसारीव वर्तते दिवाकर उदकपात्रस्थोपाधिपक्षपातितत्प्रतिबिम्बरूपेण तद्धर्मांश्चलनादीननुभूय कलुषितत्वेन वर्तते यथा तद्वदित्याह—द्वेति । द्वा द्वौ घटाकाशमहाकाशस्थानीयौ जीवपरमात्मानौ सुपर्णा सुपर्णौ शोभनपतनौ शोभनगमनौ सयुजा सयुजौ बिम्बप्रतिबिम्बभावेन सदा संयुक्तौ सखाया सखायौ नित्योपकार्योपकारकत्वेन वर्तेते इति सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ वा समानाख्यौ चेतनत्वादिना समानाख्यौ वा समानमनन्तसुखानुभूतेरात्मनो बिम्बप्रतिबिम्बभेदोपाधिकत्वेन किंचिज्ज्ञत्वसर्वज्ञत्वोपाधिकत्वेन नियम्यनियन्तृत्वोपाधिकत्वेन शुद्ध्यशुद्ध्युपाधिकत्वेन च समानं प्रकृतिप्राकृतं वृक्षमुच्छेदधर्मत्वाद्वृक्षमध्यात्मादिभेदभिन्नत्वाद्बहुशाखत्वात्पुण्यपापादिबहुबीजत्वात्सुखदुःखादिबहुफलप्रदत्वाच्च वृक्षं परिषस्वजाते परिष्वक्तवन्तौ परिगृह्य वर्तेते नियम्यत्वाद्युपाधिकत्वेन नियामकत्वाद्युपाधिकत्वेन चेमं वृक्षं परिगृह्य वर्तेते तयोः कार्यकारणोपाधिकयोर्जीवेश्वरयोर्मध्येऽन्यो मायाकार्याहंकाराख्यलिङ्गशरीराभिमानी जीवः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु विविधविचित्रविषयास्वादनं विषयसेवावासनानिमित्तमित्यर्थः । अत्त्युपभुङ्क्तेऽनश्नन्न्यः प्रकृत्याख्यमायोपाधिको बिम्बस्थानीय ईश्वरः कार्योपाधिकात्स्वप्रतिबिम्बजीवादन्योऽनश्नन्कर्मफलमनुपभुञ्जानोऽभिचाकशीति स्वयमविकृतः सन्नभितः पश्यन्सर्वसंसारधर्मशून्यः स्वयंप्रकाशाखण्डज्ञप्तिमात्ररूपेणाऽऽस्त इति यावत् । खस्थबिम्बभूतादित्यो जलधर्मशून्यः स्वप्रकाशरूपेण सर्वं प्रकाशयन्नास्ते यथा तद्वत्स एष इह प्रविष्ट आनखाग्रेभ्यः । रूपं रूपं प्रतिरूपो बभूवेत्यादिश्रुत्यन्तरात् ॥ ६ ॥

जीवस्वरूपं परमात्मस्वरूपं चानूद्य जीवस्य परमात्मैकत्वज्ञानान्मोक्षसिद्धिमाह—समान इति । समाने वृक्षे पुण्यपापफलभोगायतनत्वेन समाने वृक्ष ओव्रश्चू छेदन इतिनिर्वचनादुच्छेदात्मकेऽविद्यातत्कार्यान्नमयादिपञ्चकोशात्मके पुरुषः पूर्णत्वात्पुरुषः परमेश्वरो निमग्नश्चलनाद्यनेकधर्मयुक्ते जले चन्द्रवन्मग्नः प्रतिबिम्बितो निमग्नो नितरां मग्नोऽविद्यातत्कार्यान्नमयादिपञ्चकोशेषु तद्धर्मेषु

---

१ क. ध. 'र्मवत्त्वाद्वृ° । २ ख. °त्वा° । ३ ख. घ. °धित्वे° । ४ क °विधं वि° । ५ ख. °श्नवि° । ६ क. ग. °ति सर्वम° ।

चाहंममाभिमानपाशितत्वेन नितरां मग्नोऽनीशया शोचति मुह्यमानो मोहाख्याविद्यया तिरस्क्रियमाणसच्चिदानन्दाद्वितीयेश्वराख्यनिजरूपोऽनीशया। परमार्थतः[1] स्वयं सर्वसंसारधर्मानास्कन्दितेश्वर एव सन्नविद्याछन्नेश्वरभावत्वादहं कर्ता भोक्ता सुखी दुःखी संसारी चेत्यनीश्वरतया शोचति संसारशोकमनुभवति। जुष्टं यदा पश्यति जुष्टं हिरण्यगर्भादिभिः सेवितं सनकादियोगिभिश्च सेवितमखण्डसुखरूपत्वात्प्रियरूपं चान्यं जीवादन्य इतिभ्रमगृहीतमद्वितीयं निःसङ्ग[2][3]सुखबोधवपुष्ट्वेन परमार्थतः प्रकृतिप्राकृतेभ्योऽन्यमिति वा। ईशमीश्वरं महाकाशबिम्बादित्यस्थानीयम्। अस्य घटाकाशप्रतिबिम्बादित्यस्थानीयस्य प्रत्यगात्मनो मम महिमानमनवच्छिन्न[4]सुखबोधवपुरीश्वर एव निजमहिमेति यदा पश्यति यदा साधनचतुष्टयसंपन्नो—गुरुसंनिधौ यथावच्छ्रवणमनननिदिध्यासनान्यभ्यस्य पश्यत्यपरोक्षी करोति यदेतिवचनात्तदेत्यध्याहर्तव्यम्। तदा वीतशोक ईश्वरैकत्वात्परोक्षेण ध्वस्तसंसारतत्कारणो भवतीत्यर्थः॥ ७॥

जीवेश्वरैकत्वज्ञानस्य पुनः प्रनाड्या साधनभूतकर्मोपासनानां साक्षात्साधनश्रवणादीनां तत्प्रतिपादकवेदान्तानामुपास्यत्वेन यष्टव्यत्वेन ब्रह्मविद्योपकारकदेवानां चेश्वराधीनरूपतयेश्वरे स्थितत्वमेतैरेकत्वज्ञानाख्यमुपेयमसाध्यं चेदेषां[5] वैयर्थ्यमेकत्वज्ञानान्मोक्षं चाऽऽह—ऋच इति। ऋच इति सर्ववेदोपलक्षणम्। ऋगादिसर्वे वेदा अक्षरे न क्षरतीत्यक्षरं सर्वमश्नुत इति वाऽक्षरं तस्मिन्नक्षरे परम उत्कृष्टे वस्तुतोऽनवच्छिन्ने व्योमन्व्योम्न्याकाश आकाशशब्दवाच्ये। आकाशो वै नाम नामरूपयोर्निर्वहितेत्यादावाकाशशब्दस्य परमात्मनि प्रयोगदर्शनात्। अथवाऽसङ्गत्वाद्यविरोधेन सर्वान्तरत्वेन वर्तमानत्वादाकाशकल्पे निषेदुरिति संबन्धः। यस्मिन्पूर्वोक्तेऽक्षरे देवा हिरण्यगर्भादयः समष्टिभूता विश्वे तद्व्यष्टिभूताग्न्यादित्यादयश्च सर्वे देवा अध्युपरि निषेदुर्निषण्णा आश्रितास्तिष्ठन्ति। य ऋगादिप्रतिपादितकर्मोपासनाद्यनुष्ठाय तैः शुद्धान्तःकरणो भूत्वा पुनर्ऋगाद्युपदिष्टशमदमाद्युपबृंहितश्रवणमनननिदिध्यासनान्यनुष्ठाय तदक्षरशब्दवाच्यं परं ब्रह्माऽऽत्मत्वेन न वेद यच्छब्दश्रवणात्तच्छब्दोऽध्याहर्तव्यः। स किमृचा स्वाधीनैस्तैर्ऋगादिभिः किं प्रयोजनं करिष्यति न किमपि प्रयोजनं करिष्यतीत्यर्थः। पाठमात्रसारत्वात्। य इत्तद्विदुः। य ऋगाद्युपदि-

---

१ ख. °तस्त्वयं। २ ख. °तीयो निः°। ३ ख. °सङ्गं सु°। ४ क. °च्छिन्नं सु°। ५ ख. °देतेषां।

ष्टकर्मोपासनान्यनुष्ठाय तैः शुद्धान्तःकरणाः साधनचतुष्टयसंपन्ना ऋगाद्युपदिष्टश्रवणाद्यनुष्ठायेदित्थं शास्त्रोपदिष्टप्रकारं तत्तच्छब्दवाच्यं परं ब्रह्माऽऽत्मत्वेन विदुरपरोक्षी कुर्युस्त इमे समासते ते पूर्वोक्तसाधनानुष्ठायिन इमेऽहं ब्रह्मास्मीत्यपरोक्षीकृतैकत्वाः सन्तः समासत उक्तसाधनपरम्परासाध्याहंब्रह्मास्मीत्येकत्वदर्शनेन ध्वस्तसंसारतत्कारणाः स्वरूपत्वेनाऽऽविर्भूतनिरतिशयानन्दाश्चाऽऽसते। एवंभूता स्थितिः सम्यगासनं नाम ॥ ८ ॥

देवः परमेश्वरः स्वमायाशक्त्या पुरुषार्थसाधनप्रतिपादकान्वेदांस्तत्प्रतिपाद्ययागादींस्तत्साध्यभूतभविष्यद्वर्तमानप्रपञ्चजातं च सृष्ट्वा स्वमायाशक्तिविवर्तसमष्टिव्यष्ट्यात्मककार्यकरणात्मकोपाधौ जले चन्द्रवदनुप्रविश्याविद्याकामकर्मादिभिर्निरुद्धः सञ्जीवाख्यां लभत इत्याह—छन्दांसीति। छन्दांसि ऋग्यजुःसामाथर्वाङ्गिरसाख्या वेदाः। यज्ञा देवपूजादयो दानपर्यन्ताः। क्रतवो ज्योतिष्टोमादयः। अथवा यूपसंबन्धरहिता विहितक्रिया यज्ञास्तत्संबन्धाः क्रियाः क्रतवः। व्रतानि चान्द्रायणानशनादीनि यमनियमादीनि। भूतमतीतं भव्यं भविष्यद्यच्चान्यदपि वर्तमानं वेदा वदन्ति। यज्ञादिसाध्यत्वेन भूतभविष्यद्वर्तमानरूपेणावस्थितः प्रपञ्च इत्यस्मिन्नर्थे वेदा एव प्रमाणमिति यावत्। यच्छब्दस्य पूर्वेषु प्रत्येकं संबन्धो द्रष्टव्यः। अस्मात्प्रकृतादक्षराख्याद्ब्रह्मण एतत्पूर्वोक्तं सर्वं समुत्पद्यत इत्यध्याहृत्य योजयितव्यम्। कथं कूटस्थस्य ब्रह्मणो जगदुपादानत्वमित्याशङ्कायामाह—मायी सृजते विश्वमिति। कूटस्थस्यापि मायोपाधिकत्वात्स्वमायाशक्तिवशात्सर्वस्रष्टृत्वमुपपन्नमिति यावत्। एतदित्यस्यास्मादित्यनेनान्वयो दर्शितः। तस्मिन्समष्टिव्यष्टिकार्यकारणात्मके विश्वप्रपञ्चे स एव मायया संनिरुद्धो मायया निर्मिते तस्मिन्मायया संनिरुद्धो बद्धो माययाऽन्यः सन्परिवर्तते मायी मायोपाधिकः सन्नेतत्पूर्वोक्तं विश्वं सृजत इति वेदा वदन्ति। अस्माद्ब्रह्मणो माययाऽन्यः संस्तस्मिन्संनिरुद्धो बद्ध इति व्यवहितेनान्वयो वा ॥ ९ ॥

पदे पद उक्ताया जगत्प्रकृतेर्मायात्वं तदधिष्ठानानन्तसुखचिन्मात्रस्य परमेश्वरस्य निजरूपत्वं प्रकृतिभूतमायया तदेकदेशैश्च कार्यत्वेन सर्वस्य व्याप्यत्वं मायाधिष्ठानभूतानन्तसुखचिन्मात्रपरमेश्वरेण तदेकदेशैश्चाधिष्ठेयत्वेन सर्वस्य व्याप्यत्वं चाऽऽह—मायां त्विति। तत्र तत्र जगत्प्रकृतित्वेनोक्ता या तां मायां

१ ख. °रकार°। २ ख. °भूतं भ°। ३ ख. ग. 'नरूपेण वर्तमानप्र'। ४ क. घ. °र्थकार°। ५ क. स च जीवा°। ६ ग °रसः सर्वे वे°। ७ क. घ °विष्यं यच्चा°। ८ ख 'र्थकर°। ९ क. घ. °देशे स्वाधि°।

विद्याज्जानीयात् । तुशब्दोऽवधारणे तत्र तत्र परमेश्वरत्वेन य उक्तस्तं महेश्वरं महांश्चासावीश्वरश्चेति महेश्वरस्तमद्वितीयसुखचिन्मात्रवपुरीश्वरं मायिनं मायायाः स्वरूपस्फुरणप्रदतयाऽधिष्ठानत्वेनैवोपकारकं विद्यात् । तुशब्दोऽवधारणे । अस्य मायिनः परमेश्वरस्यावयवभूतैर्घटाकाशस्थानीयैरिदं रजतमित्यत्रेदंस्थानीयैः सत्तास्फुरणैराकाशादिः सन्नाकाशादि स्फुरतीति व्याप्तमध्यस्तत्वेनैव व्याप्तं न तु स्वपरिणामत्वेन । अत्रापि तुशब्दोऽवधारणे । किं सर्वमिदं जगत्सर्वं विभक्तमिदं दृश्यं जगत् । अथवा मायायाः सत्तास्फुरणप्रदत्वेनाधिष्ठातुरस्येश्वरस्यावयवभूतैस्तस्मिन्नध्यस्तत्वात्तदङ्गभूतैर्मायातत्सामर्थ्यैस्तद्विवर्तत्वेनैव व्याप्तं सर्वमिदं जगत् । तस्येत्येके पठन्ति । तस्मान्मायाविवर्तत्वात्सर्वस्य प्रपञ्चजातस्य सम्यग्दर्शनेन निवर्तयितुं योग्यत्वादद्वितीयेश्वरैकत्वज्ञानासिद्धये मुमुक्षुभिर्यत्नः कर्तव्य इत्यभिप्रायः ॥ १० ॥

मायाख्यमूलयोनेराकाशाद्यवान्तरयोनीनां चाद्वितीयसुखचिन्मात्रवपुरीश्वरस्याधिष्ठातृत्वं मायामधिष्ठाय वियदाद्युत्पादकत्वं वियदाद्यवान्तरयोनीरवष्टभ्येतरेषां सृष्ट्यादिहेतुत्वं तेन सर्वाधिष्ठात्रेश्वरेणाहं ब्रह्मास्मीत्येकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह—यो योनिमिति । यः सुखचिन्मात्रवपुरीश्वरो योनिं योनिं वीप्सैषा । मूलप्रकृतिं मायां वियदाद्यवान्तरप्रकृतीश्चाधितिष्ठति सत्तास्फुरणप्रदत्वेनाधिष्ठाय तिष्ठति । अथवाऽयोनिं योनिं योनिः कारणमस्या न विद्यत इत्ययोनिं योनिं प्रकृतिमनादिसिद्धां प्रकृतिमिति यावत् । यो मूलप्रकृतिमधितिष्ठति । अथवा योनिं योनिं योनिः स्थानमध्यात्मादि तत्तदध्यात्मादि स्थानमधितिष्ठति यमयति नियमयत्यन्तर्यामिरूपेण । अथवा देवतिर्यङ्नरादिसरीसृपस्थावरजङ्गमादियोनिं योनिं प्रत्यधितिष्ठति हिरण्यगर्भादिरूपेणैकोऽद्वितीयः । यस्मिन्मायाधिष्ठातरीश्वरे सुखबोधवपुष्युपसंहारकाले सर्वमिदं जगत्समेति संगच्छत ऐक्यं याति । व्येति च सृष्टिकाले विविधमेति वियदादिरूपेण पृथग्भवति कारणे विविधरूपेण तादात्म्यं प्रतिपद्यत इति यावत् । येनेत्येके पठन्ति तत्राप्येषैव योजना । तमीशानं तं प्रकृतमीश्वरं तं वरदं मोक्षपर्यन्तानां वराणां दातारं देवं द्योतनस्वभावं ज्ञानस्वरूपमीड्यं वेदेतिहासपुराणस्तुत्यं निचाय्य निश्चयेनाहं ब्रह्मास्मीति साक्षात्कृ-

---

१ ख. °त्तदेकदेशभू° । ग. °त्तदंशभू° । २ ख. °यायास्तत्सा° । ३ ग. °खसंविन्मा° । ४ ग. °द्युत्पत्त्यादिहेतुत्वं । ५ ख. °करूपत्वं । ६ ग. °योनीनव° । ७ ख. °ङ्मनुष्यादि° । ८ ख. ग. प्रकृत्याधि° ।

त्येमां शान्तिं सुषुप्तिप्रलयादौ सर्वसंहारोपलक्षणा या शान्तिः प्रसिद्धा तामिमां सर्वसंहारोपलक्षणां शान्तिं सम्यग्ज्ञानेन मूलाविद्यादाहादत्यन्तं पुनरावृत्तिरहितामेत्येकत्वज्ञानेन ध्वस्तसंसारकारणो भवतीत्यर्थः ॥ ११ ॥

हिरण्यगर्भं प्रति प्रसादाभिमुखं परमेश्वरं प्रति सम्यग्ज्ञानप्रार्थनमाह—यो देवानामिति । यो देवानामित्युक्तार्थो मन्त्रः पश्यतापश्यत् । व्यत्ययेनाऽऽत्मनेपदं बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः । अवान्तरसर्गस्थितिप्रलयकर्तृत्वेन वेदप्रवर्तकत्वेन च निरीक्षणं कृतवानित्यर्थः । विश्वाधिपो देव इत्येके पठन्ति ॥ १२ ॥

हिरण्यगर्भादिदेवान्प्रति स्वामित्वं भूरादिलोकान्प्रत्याश्रयत्वं व्यष्टिजीवान्प्रति नियन्तृत्वमन्तःकरणशुद्धिद्वारेण सम्यग्ज्ञानाधिकारसिद्ध्यर्थं मुमुक्षुभिराराध्यत्वं चेश्वरस्याऽऽह—यो देवानामिति यो देवनां यः प्रकृतः परमेश्वरो देवानां समष्टिरूपाणां देवानामधिपः स्वामी समष्टिकार्योपाधिकान्हिरण्यगर्भादीन्प्रकृतिमूलकारणोपाधिक ईश्वरः स्वामी यस्मिन्परमेश्वरे सर्वकारणे लोका भूरादिलोका लोक्यन्त इति लोका दृश्यभूताः सर्वे पदार्था वाऽधिश्रिता ओतप्रोतत्वेनाध्युपरि श्रिता यः कारणोपाधिकः परमेश्वर ईश ईष्टे तकारलोपश्छान्दसः । अस्य द्विपदो व्यष्ट्युपाध्यभिमानिनो मनुष्यादेश्चतुष्पदो व्यष्ट्युपाध्यभिमानिनः पश्वादेश्च कस्मै काय सुखरूपाय । छान्दसः स्मैभावः । देवाय द्योतनस्वभावाय यच्छब्दसंयोगात्तच्छब्दोऽध्याहर्तव्यस्तस्मै सुखसंवित्स्वरूपायेत्यर्थः । तस्मा इति केचित्पठन्ति तस्मिन्पाठे तस्मै कल्याणस्वभावायेत्यर्थः । हविषा तदाराधनभूतद्रव्यैश्चरुपुरोडाशादिभिर्विधेम परिचरेम विधेः परिचरणकर्मण एतद्रूपम् ॥ १३ ॥

ईश्वरस्य परमसूक्ष्मत्वं संसारचक्रमध्ये साक्षित्वेनावस्थितत्वं सर्वजगत्स्रष्टृत्वं सर्वात्मकत्वमीश्वरैकत्वज्ञानान्मोक्षसिद्धिश्चेत्येतदर्थजातमसकृदुक्तमपि ग्रन्थलाघवाद्बुद्धिलाघवं प्रयोजनमपेक्षितव्यमिति न्यायमाश्रित्याऽऽह—सूक्ष्मातिसूक्ष्ममिति । सूक्ष्मातिसूक्ष्मं भूतानि सूक्ष्माणि तेष्वप्युत्तरोत्तरात्पूर्वं पूर्वं सूक्ष्मं तेभ्यस्तन्मात्राणि सूक्ष्माणि तेष्वप्युत्तरोत्तरात्पूर्वं पूर्वं सूक्ष्मं तेभ्यो महच्छब्दवाच्यमीक्षणं सूक्ष्मं तस्मादपि प्रकृतिः सूक्ष्मा प्रकृतेरपि स्वप्रकाशचिदेकरसवपुरीश्वरः सूक्ष्म इति सूक्ष्मातिसूक्ष्मम् । कलिलस्य प्रकृतिप्राकृताख्यस्य संसारदुर्गस्य गहनस्य मध्येऽन्तःसाक्षित्वेनावस्थितं विश्वस्य स्रष्टारं विश्वस्य भूतभौतिकप्रपञ्चजातस्य स्रष्टारं तत्तच्छब्दवाच्यभूतमनेकरूपं नानाविधं जलपा-

---

१ ख. करणभा° ।

त्रेषु चन्द्रवद्ब्रह्मादिपिपीलिकान्तेषु समष्टिव्यष्टिरूपकार्य[1]करणोपाधिष्वनेके[2]रूपेणावभासमानं विश्वस्य मायातद्विवर्तात्मकस्यैकमद्वितीयं परिवेष्टितारं स्वरूपस्फुरणप्रदत्वेन परितोऽन्तर्बहिश्च वेष्टितारं शिवं निःसङ्गत्वात्प्रकृतिप्राकृतैश्च मलैरनास्कन्दितानन्तसुखसंविन्मात्ररूपं ज्ञात्वाऽहं ब्रह्मास्मीत्यपरोक्षीकृत्य शान्तिमत्यन्तमेति । व्याख्यातमेतत् ॥ १४ ॥

ईश्वरस्य सर्वपोषकत्वं सर्वस्वामित्वं समष्टिव्यष्टिरूपकार्य[3]करणोपाधिषु प्रत्यग्रूपेणावस्थितत्वं सनकसनन्दनवामदेवादिभिर्हिरण्यगर्भाद्यधिकारिपुरुषैश्चाऽऽत्मतया प्राप्तत्वमितरस्यापि साधनचतुष्टयसंपन्नस्य योग्याधिकारिण ईश्वरैकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह—स एवेति । स एव स प्रकृतः परमेश्वर एव काले पूर्वकल्पेषु जीवैः संचितकर्म[4]पाककाले भुवनस्य गोप्ता समस्तभुवनस्य कर्मानुगुणतयाऽऽनन्दप्रदातृत्वेन रक्षिता विश्वाधिपोऽध्यात्मादिभेदभिन्नस्य विश्वस्य स्वामी सर्वभूतेषु गूढो ब्रह्मादिस्तम्बपर्यन्तेषु समष्टिव्यष्ट्यात्मकेषु सर्वभूतेष्वन्तःप्रविष्टोऽद्वितीयानन्दानुभवरूपेण गूढः सन्केवलसाक्षिमात्ररूपेण वर्तते । यस्मिन्नपास्ताशे[5]षविशेषानन्तसुखचिन्मात्ररस ईश्वरे युक्ता एकतामापन्नाः । के ब्रह्मर्षयः सनकादयो देवताश्च हिरण्यगर्भादयस्तमेवं ज्ञात्वा तमीश्वरमेवमुक्ते प्रकारेणाहमस्मीति ज्ञात्वाऽपरोक्षीकृत्य मृत्युपाशांश्छिनत्ति मृत्युर्वै तम इतिश्रुतेर्मूलप्रकृतिभूतं तमआख्यं मृत्युं तद्विवर्तरूपाविद्याकामकर्माख्यान्पाशांश्छिनत्ति नाशयत्येकत्वज्ञानाग्निना दहतीत्यर्थः ॥ १५ ॥

ईश्वरस्य परमसूक्ष्मनिरतिशयानन्दस्वभावत्वं सर्वदोषैरश्लिष्टत्वं समष्टिव्यष्ट्यात्मककार्य[6]कारणसंघातेषु जीवरूपेण गूढतया स्थितत्वं सर्वस्य स्वरूपस्फुरणप्रदत्वेन व्याप्तत्वमीश्वरैकत्वज्ञानात्सर्वपाशापहानिं चाऽऽह—घृतात्परमिति । पुरुषार्थरूपेण परमसूक्ष्मत्वमाह—घृतात्परमिति । घृतात्परमुपरि वर्तमानं मण्डं सारं सूक्ष्मं प्रीतिविषयं च यथा तद्वन्मुमुक्षुः प्रीतिविषयमतिसूक्ष्मं च व्यष्टिभूतेभ्यो विश्वाख्यं विराड्रूपं सूक्ष्मं तस्मात्तैजसाख्यं हिरण्यगर्भरूपं सूक्ष्मं तस्मात्प्राकृताख्यात्प्रकृतिरूपं सूक्ष्मं तस्मादन्तर्यामिरूपं सूक्ष्मं तस्मादपास्तसमस्तविशेषानन्तसत्यसुखचिन्मात्रं सूक्ष्मम् । एवमतिसूक्ष्मं ज्ञात्वा शिवमविद्याकामकर्मादिमलैरसंस्पृष्टं ब्रह्मादिस्तम्बपर्यन्तेषु समष्टिव्यष्ट्यात्मकसर्वभूतेष्वनुप्रविश्य तैर्गूढं तिरस्कृतेश्वरभावं विश्वस्य प्रकृतिप्राकृतात्मकस्यैकमद्वितीयं सर्पादे

१ क. घ. °र्यकार° । २ ख. ग. °कस्वरू° । ३ क. °र्थकार° । ४ ग. °र्मपरिपा° । ५ ग. °शेषेऽन° । ६ ख. °र्यकर° । ७ ख. ग. °श्वाख्यवि° । ८ क. घ. °विषयान° । ९ ख. ग. खसंविन्मा° ।

रज्वादिरिव परिवेष्टितारं स्वरूपप्रदतया परितो वेष्टितारं देवं द्योतनस्वभावं चिन्मात्ररूपं ज्ञात्वाऽहमस्मीति ज्ञात्वा साक्षात्कृत्य मुच्यते सर्वपाशैः प्रकृतिप्राकृताख्यैः संसारपाशैर्मुच्यते । अहं ब्रह्मास्मीत्येकत्वदर्शनेन बाधिताविद्यातत्कार्यसंसारपाशो भवतीत्यर्थः ॥ १६ ॥

अद्वितीयसुखचिन्मात्रवपुरात्मनो महदादिप्रपञ्चरूपेणावस्थानं महाकाशस्थानीयपरमात्मरूपेणावस्थानं संस्कृतमतिगम्यत्वं तदेकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह–एष इति । एष प्रकृतो देवोऽनन्तसुखचिन्मात्रैकरसो विश्वकर्मा विश्वं महदादिजगत्कर्म क्रियत इति कर्म कार्यं मायावष्टम्भाद्विश्वं कार्यमस्येति विश्वकर्मा महात्मा महांश्चासावात्मा चेति महात्मा महाकाशस्थानीयपरमात्मरूपेणापि स एव वर्तत इति यावत् । सदा सर्वदा जनानां प्राणिनां हृदयेऽन्तःकरणगुहायां जलपात्रे चन्द्रवत्संनिविष्टः सम्यङ्निविष्टो हृदयाख्यलिङ्गशरीरस्य स्वरूपतया साक्षितया च तस्मिन्सम्यङ्निविष्टो जीवात्मरूपेणापि स एव वर्तत इति यावत् । हृदा हृञ् हरण इतिस्मरणाद्धरतीति हृत्तेन हृदा नेति नेतीतिनिषेधोपदेशेन मनीषेदं परमार्थमिदमपरमार्थमयमात्माऽयमनात्मेत्यादिविचारबुद्ध्या मनसा तदुभयसाध्याहंब्रह्मास्मीत्येकत्वज्ञानेनाभिक्लृप्तो ह्यभिप्रकाशितोऽद्वितीयतयाऽऽत्मतयाऽऽत्मत्वेनाभिव्यक्तो भवतीत्यर्थः । ये शमादिसंपन्ना अनन्तसत्यसुखचिन्मात्रैकरसं तत्पदार्थभूतं पूर्वोक्तमीश्वरमेतत्त्वंपदार्थभूतप्रत्यगात्मत्वेन विदुरपरोक्षी कुर्युस्तेऽपरोक्षज्ञानवन्तोऽमृता भवन्ति नित्यसिद्धेश्वरा एव भवन्तीति ॥ १७ ॥

प्रलयादौ मोक्षे चेश्वरस्याद्वितीयत्वावधारणादितरस्मिन्कालेऽपि भ्रान्त्या सद्वितीयत्वप्रतिभासः परमार्थतः सदा द्वैतशून्यत्वमेवेत्याह—यदेति । यदा यस्यां विद्यावस्थायामतमो न तमोऽस्येत्यतमः शिवतत्त्वं सम्यग्दर्शनेन बाधितमूलप्रकृत्याख्याविद्यातमस्त्वात्तत्तदा न दिवा दिनकल्पनाऽपि नास्ति न रात्री रात्रिकल्पनाऽपि नास्ति । न सत् । भावकल्पनाऽपि नास्ति । न चासत् । अभावकल्पनाऽपि नास्ति । तर्हि सर्वशून्यमेव तत्त्वेन प्राप्तमिति नेत्याह—शिव एव केवल इति । शिव एव तत्त्वेनावस्थितो न शून्यमित्येवकारार्थः । शिवोऽविद्यादिमलास्पृष्टः सुखसंविद्रूपः केवलो विद्यया ध्वस्तमूलकारणतमस्त्वात्तन्मूलदिवादिप्रभेदशून्यत्वाच्चाद्वितीयः । तदक्षरं तदीश्वरतत्त्वमक्षरं न क्षरतीत्यक्षरं नित्यं तत्तच्छब्दार्थभूतं सवितुः सवितृमण्डलमध्यवर्तिस-

---

१ क. घ. °खसंविन्मा° । २ क. घ. म्यक्प्रवि° । ३ क. °रा भ° ।

वितुरपि वरेण्यं वरणीयमथ वा सवितुः स्थावरजङ्गमात्मकस्य जगत उत्पादयितुर्मुमुक्षुभिः प्रार्थनीयं निर्गुणं वरेण्यं गुरुरूपमिति वा वरेण्यं वरणीयं संभजनीयरूपमिति वा प्रज्ञा चाविद्यातत्कार्यद्वैतदाहनिमित्ताहंब्रह्मास्मीत्येकत्वविद्यालक्षणा प्रज्ञा च तस्माच्छिवाद्धेतोः प्रसृता साधनचतुष्टयसंपन्नयोग्याधिकारिषु प्रसृता पुराण्याविरिञ्चात्संप्रदायपरम्परयाऽऽगता । अथवा यदा प्रलयावस्थायां तमः । नासदासीन्नो सदासीत्तम आसीदिति श्रुत्यन्तरोक्तम् । आसीदिदं तमोभूतमितिस्मृत्युक्तं च यत्तमस्तदेवावशिष्टं तत्तदानीं महदादिसर्वकार्यजातस्य मूलप्रकृतितमोमात्रतया विलयावस्थायां दिवादिप्रभेदो नास्ति । इदं सदिदमसदयं भावोऽयमभाव इत्यपि प्रभेदो नास्ति तावन्मात्रतया ग्रस्तसमस्तविशेषं तमोऽपि शिव एव शिवान्न भेदेनावस्थितम् । अतः शिवः केवलस्तस्यामवस्थायामद्वितीयत्वेनावस्थितः । तच्छिवतत्त्वमक्षरं न क्षरतीत्यक्षरं महाप्रलयादावपि स्थितत्वान्नित्यं तत्तच्छब्दार्थभूतम् । सवितुः सर्वस्य प्रसवितुर्वरेण्यमुपासकैर्वरणीयं रूपं च प्रज्ञा च त्रयीलक्षणा विद्या तस्माच्छिवतत्त्वात्प्रसृता पुरुषनिश्वासवन्निर्मिता पुराण्यनादिसिद्धा नियतक्रमस्वरादिविशिष्टा सर्वदेति यावत् ॥ १८ ॥

परमेश्वरस्य सर्वतोऽनवग्रहाद्वितीयवपुष्ट्वमद्वितीयसुखैकरसत्वात्केनाप्यनुपमेयत्वं दिक्कालाद्यनवच्छिन्नयशोनामत्वं चाऽऽह—नैनमूर्ध्वमिति । एनं प्रकृतं शिवमूर्ध्वं नित्यत्वान्न कश्चिदपि परिजग्रभन्न पर्यग्रहीन्न परिग्रहीतुं शक्नुयात् । न तिर्यञ्चं दिग्देशानवच्छिन्नत्वात्तिर्यञ्चमपि परिग्रहीतुं न शक्नुयात् । न मध्ये निरंशत्वादद्वितीयत्वाच्च मध्यस्थानाभावान्न मध्ये कश्चिदपि पर्यग्रहीत् । न तस्य प्रतिमाऽस्ति तस्येश्वरस्यानन्तसुखानुभूतित्वात्तादृशद्वितीयाभावान्न प्रतिमाऽस्त्युपमा नास्ति यस्य नाम महद्यशो यस्य परमेश्वरस्य नामाभिधानं महद्यशो दिगाद्यनवच्छिन्नं परिपूर्णं यश इति न तस्य प्रतिमाऽस्तीत्यन्वयः॥ १९॥

परमेश्वरस्येन्द्रियैर्ग्राह्यत्वायोग्यतां प्रत्यक्त्वेनावस्थानं तदेकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह—न संदृश इति । अस्य परमेश्वरस्य रूपं स्वरूपं रूपादिहीनं निर्विशेषस्वयंप्रकाशचिदेकरसत्वात्संदृशे चक्षुरादीन्द्रियैः संदर्शनयोग्ये देशे न तिष्ठति न वर्तते चक्षुरादिभिः संदर्शनाय न तिष्ठतीति वा । इन्द्रियैर्ग्रहीतुमयोग्यस्वरूपत्वादेनमीश्वरं चक्षुषा चक्षुषेत्युपलक्षणमेतच्चक्षुरादीन्द्रियैः कश्चन कोऽपि न पश्यति ग्रहीतुं न शक्नुयात् । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यतीत्या-

१ ख. °रेण्यमि° । २ क. घ. °नीयं रू° । ३ क. ग. °तच्छ° । ४ क. °रूपा° ।

रज्वादिरिव परिवेष्टितारं स्वरूपप्रदतया परितो वेष्टितारं देवं द्योतनस्वभावं चिन्मात्ररूपं ज्ञात्वाऽहमस्मीति ज्ञात्वा साक्षात्कृत्य मुच्यते सर्वपाशैः प्रकृतिप्राकृताख्यैः संसारपाशैर्मुच्यते । अहं ब्रह्मास्मीत्येकत्वदर्शनेन बाधिताविद्यातत्कार्यसंसारपाशो भवतीत्यर्थः ॥ १६ ॥

अद्वितीयसुखचिन्मात्रवपुरात्मनो महदादिप्रपञ्चरूपेणावस्थानं महाकाशस्थानीयपरमात्मरूपेणावस्थानं संस्कृतमतिगम्यत्वं तदेकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह—एष इति । एष प्रकृतो देवोऽनन्तसुखचिन्मात्रैकरसो विश्वकर्मा विश्वं महदादिजगत्कर्म क्रियत इति कर्म कार्यं मायावष्टम्भाद्विश्वं कार्यमस्येति विश्वकर्मा महात्मा महांश्चासावात्मा चेति महात्मा महाकाशस्थानीयपरमात्मरूपेणापि स एव वर्तत इति यावत् । सदा सर्वदा जनानां प्राणिनां हृदयेऽन्तःकरणगुहायां जलपात्रे चन्द्रवत्संनिविष्टः सम्यङ्निविष्टो हृदयाख्यलिङ्गशरीरस्य स्वरूपतया साक्षितया च तस्मिन्सम्यङ्निविष्टो जीवात्मरूपेणापि स एव वर्तत इति यावत् । हृदा हृञ् हरण इतिस्मरणाद्धरतीति हृत्तेन हृदा नेति नेतीतिनिषेधोपदेशेन मनीषेदं परमार्थमिदमपरमार्थमयमात्माऽयमनात्मेत्यादिविचारबुद्ध्या मनसा तदुभयसाध्याहंब्रह्मास्मीत्येकत्वज्ञानेनाभिक्लृप्तो ह्यभिप्रकाशितोऽद्वितीयतयाऽऽत्मतयाऽऽत्मत्वेनाभिव्यक्तो भवतीत्यर्थः । ये शमादिसंपन्ना अनन्तसत्यसुखचिन्मात्रैकरसं तत्पदार्थभूतं पूर्वोक्तमीश्वरमेतत्त्वंपदार्थभूतप्रत्यगात्मत्वेन विदुरपरोक्षी कुर्युस्तेऽपरोक्षज्ञानवन्तोऽमृता भवन्ति नित्यसिद्धेश्वरा एव भवन्तीति ॥ १७ ॥

प्रलयादौ मोक्षे चेश्वरस्याद्वितीयत्वावधारणादितरस्मिन्कालेऽपि भ्रान्त्या सद्वितीयत्वप्रतिभासः परमार्थतः सदा द्वैतशून्यत्वमेवेत्याह—यदेति । यदा यस्यां विद्यावस्थायामतमो न तमोऽस्येत्यतमः शिवतत्त्वं सम्यग्दर्शनेन बाधितमूलप्रकृत्याख्याविद्यातमस्त्वात्तत्तदा न दिवा दिनकल्पनाऽपि नास्ति न रात्री रात्रिकल्पनाऽपि नास्ति । न सत् । भावकल्पनाऽपि नास्ति । न चासत् । अभावकल्पनाऽपि नास्ति । तर्हि सर्वशून्यमेव तत्त्वेन प्राप्तमिति नेत्याह—शिव एव केवल इति । शिव एव तत्त्वेनावस्थितो न शून्यमित्येवकारार्थः । शिवोऽविद्यादिमलास्पृष्टः सुखसंविद्रूपः केवलो विद्यया ध्वस्तमूलकारणतमस्त्वात्तन्मूलदिवादिप्रभेदशून्यत्वाच्चाद्वितीयः । तदक्षरं तदीश्वरतत्त्वमक्षरं न क्षरतीत्यक्षरं नित्यं तत्तच्छब्दार्थभूतं सवितुः सवितृमण्डलमध्यवर्तिस-

१ क. घ. °खसंविन्मा° । २ क. घ. म्यक्प्रवि° । ३ क. °रा भ° ।

वितुरपि वरेण्यं वरणीयमथ वा सवितुः स्थावरजङ्गमात्मकस्य जगत उत्पादयितुर्मुमुक्षुभिः प्रार्थनीयं निर्गुणं वरेण्यं गुरुरूपमिति वा वरेण्यं वरणीयं संभजनीयरूपमिति वा प्रज्ञा चाविद्यातत्कार्यद्वैतदाहनिमित्ताहंब्रह्मास्मीत्येकत्वविद्यालक्षणा प्रज्ञा च तस्माच्छिवाद्धेतोः प्रसृता साधनचतुष्टयसंपन्नयोग्याधिकारिषु प्रसृता पुराण्याविरिञ्चात्संप्रदायपरम्परयाऽऽगता । अथवा यदा प्रलयाद्यवस्थायां तमः । नासदासीन्नो सदासीत्तम आसीदिति श्रुत्यन्तरोक्तम् । आसीदिदं तमोभूतमितिस्मृत्युक्तं च यत्तमस्तदेवावशिष्टं तत्तदानीं महदादिसर्वकार्यजातस्य मूलप्रकृतितमोमात्रतया विलयावस्थायां दिवादिप्रभेदो नास्ति। इदं सदिदमसदयं भावोऽयमभाव इत्यपि प्रभेदो नास्ति तावन्मात्रतया ग्रस्तसमस्तविशेषं तमोऽपि शिव एव शिवान्न भेदेनावस्थितम् । अतः शिवः केवलस्तस्यामवस्थायामद्वितीयत्वेनावस्थितः । तच्छिवतत्त्वमक्षरं न क्षरतीत्यक्षरं महाप्रलयादावपि स्थितत्वान्नित्यं तत्तच्छब्दार्थभूतम् । सवितुः सर्वस्य प्रसवितुर्वरेण्यमुपासकैर्वरणीयं रूपं च प्रज्ञा च त्रयीलक्षणा विद्या तस्माच्छिवतत्त्वात्प्रसृता पुरुषनिश्वासवन्निर्मिता पुराण्यनादिसिद्धा नियतक्रमस्वरादिविशिष्टा सर्वदेति यावत् ॥ १८ ॥

परमेश्वरस्य सर्वतोऽनवग्रहाद्वितीयवपुष्ट्वमद्वितीयसुखैकरसत्वात्केनाप्यनुपमेयत्वं दिक्कालाद्यनवच्छिन्नयशोनामत्वं चाऽऽह—नैनमूर्ध्वमिति । एनं प्रकृतं शिवमूर्ध्वं नित्यत्वान्न कश्चिदपि परिजग्रभन्न पर्यग्रहीन्न परिग्रहीतुं शक्नुयात् । न तिर्यञ्चं दिग्देशानवच्छिन्नत्वात्तिर्यञ्चमपि परिग्रहीतुं न शक्नुयात् । न मध्ये निरंशत्वादद्वितीयत्वाच्च मध्यस्थानाभावान्न मध्ये कश्चिदपि पर्यग्रहीत् । न तस्य प्रतिमाऽस्ति तस्येश्वरस्यानन्तसुखानुभूतित्वात्तादृशाद्वितीयाभावान्न प्रतिमाऽस्त्युपमा नास्ति यस्य नाम महद्यशो यस्य परमेश्वरस्य नामाभिधानं महद्यशो दिगाद्यनवच्छिन्नं परिपूर्णं यश इति न तस्य प्रतिमाऽस्तीत्यन्वयः॥ १९॥

परमेश्वरस्येन्द्रियैर्ग्राह्यत्वायोग्यतां प्रत्यक्त्वेनावस्थानं तदेकत्वज्ञानान्मोक्षसिद्धिं चाऽऽह—न संदृश इति । अस्य परमेश्वरस्य रूपं स्वरूपं रूपादिहीनं निर्विशेषस्वयंप्रकाशचिदेकरसत्वात्संदृशे चक्षुरादीन्द्रियैः संदर्शनयोग्ये देशे न तिष्ठति न वर्तते चक्षुरादिभिः संदर्शनाय न तिष्ठतीति वा । इन्द्रियैर्ग्रहीतुमयोग्यस्वरूपत्वादेनमीश्वरं चक्षुषा चक्षुषेत्युपलक्षणमेतच्चक्षुरादीन्द्रियैः कश्चन कोऽपि न पश्यति ग्रहीतुं न शक्नुयात् । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यतीत्या-

१ ख. °रेण्यमि° । २ क. घ. °नीयं रू° । ३ क. ग. °तच्छ° । ४ क. °रूपा° ।

दिश्रुत्यन्तरात् । हृदाऽयमात्मेदं नेति नेतीतिशोधनरूपोपदेशेन हृदिस्थं हृदयेऽहंकारगुहायां प्रत्यक्त्वेनावस्थितं मनसा संस्कृताहंकारजन्यबुद्ध्या य एनमेवं विदुर्ये साधनचतुष्टयसंपन्ना योग्याधिकारिण एनमात्मानमेवमित्थं विदुरहं ब्रह्मास्मीत्यपरोक्षी कुर्युस्तेऽहं ब्रह्मास्मीत्यपरोक्षीकृतैकत्वा अमृता भवन्त्यमरणधर्माणो भवन्ति मरणहेतुभूतदेहसंबन्धं पुनर्न प्रतिपद्यन्त इति यावत् ॥ २० ॥

ईश्वराधीनत्वान्मोक्षसिद्धेस्तत्सिद्धय ईश्वरप्रार्थनमाह—अजात इत्येवमिति । अजात इतीतिशब्दो हेत्वर्थः । यस्मात्त्वमेवमुक्तप्रकारेणाजातो जन्ममरणाशनापिपासाशोकमोहलक्षणषडूर्मिवर्जितो जन्मादिषड्भावविकारवर्जितो वाऽजात इति सर्वेषामुपलक्षणं तदितरत्सर्वं जन्मादिमत्तस्माज्जन्मजरामरणाशनापिपासाशोकमोहाद्यनुविद्धात्संसाराद्भीरुर्भीतः सन्कश्चिदतिविशुद्धान्तःकरणो योग्याधिकार्यहं प्रपद्ये त्वयैकतां प्रपद्ये प्राप्नुयाम् । रुद्र रुजं संसारदुःखं द्रावयतीति रुद्रः संहारकाले सर्वं रोदयतीति वा रुद्रो हे रुद्र यत्ते दक्षिणं मुखं ते तव दक्षिणं दक्षं मुमुक्षूणां त्वदेकावलम्बनानां सबीजसंसारदुःखदाहसमर्थं मुखं निर्गुणं रूपं तव सकलनिष्कलमुखयोर्मध्ये मोक्षप्रदानसमर्थं निष्कलं मुखं यत्तेन मोक्षप्रदानसमर्थनिष्कलमुखेन मामतिविशुद्धान्तःकरणं साधनचतुष्टयसंपन्नं योग्याधिकारिणं मां पाहि तद्रूपेणाहं ब्रह्मास्मीतिबुद्धिफलकारूढो भूत्वा संसारदुःखतद्बीजदाहकत्वेन पाहि रक्ष नित्यं सर्वदाऽऽत्मतया निरतिशयानन्दस्वभावाभिव्यक्तिः संसारतद्बीजोपशमनं च नित्यं यथा भवति तथा पाहीत्यर्थः । प्रपद्यत इति केचित् । अस्मिन्पक्षेऽन्योऽपि मुमुक्षुः कश्चिन्मोक्षसिद्ध्यर्थं त्वामेव प्रपद्यतेऽतोऽहमपि मोक्षसिद्ध्यर्थं त्वामेव प्रपद्य इत्यध्याहारेणान्वयः ॥ २१ ॥

अस्माञ्शिष्यप्रशिष्यान्कार्यकरणानि च सम्यग्ज्ञानायोग्यत्वेन मा हिंसीर्योग्यान्येव कुर्वितीश्वरं प्रति प्रार्थनामाह—मा नस्तोक इति । नोऽस्माकं विदुषां संबन्धिनि तोके शिष्ये पुत्रे तनये पौत्रे प्रशिष्ये विषये वा मा न आयावायुषि मा नो गोषु सम्यग्ज्ञानैकारणभूतेषु सम्यग्ज्ञानसाधनपरम्पराप्रतिपादकेषु च वेदेषु मा नो अश्वेष्विन्द्रियेषु । इन्द्रियाणि हयानाहुरितिश्रुत्यन्तरात् । रीरिषः । मा रीरिष इति सर्वत्र संबध्यते सर्वत्र सप्तमी विषयत्वेन द्रष्टव्या तत्तद्विषयां हिंसां मा कार्षीः । रिषतिर्हिंसार्थः । वीरान्मा नो रुद्र

१ ग. °त्वादमृ° । २ क. ग. घ. °नायापि° । ३ क. घ. °तोऽस्तित्वादि° । ४ ग. °नायापि° । ५ ख. ग. °नुबद्धा° । ६ ग. °काल° । ७ क. घ. °यैकार° । ८ ख. ग. °ग्यानेव । ९ ख. ग. °र्थनमा° । १० क. ग. °ष्ये वा । ११ क. घ. °नकर° ।

भामितो वधीः । वीरान्विक्रमवतः परिचारकांस्तानस्माकं संबन्धिनो हे रुद्र भामितो भाम क्रोध इत्यतस्तैरपचारेण क्रोधितः सन्वधीः । मा वधीरिति पूर्ववत्प्रतिषेधेन संबन्धः । हविष्मन्तः सदमित्वा हवामहे । एतेषां सम्यग्ज्ञानयोग्यत्वसिद्ध्यर्थं वयं हविष्मन्तस्त्वदाराधनसाधनवन्तो भूत्वा सदं सदा, इदेव सदैव त्वा त्वां हवामहे यजामहे रक्षणार्थमाह्वयामह इति वा । अथवा न केवलं निःश्रेयसार्थिभिरेवासौ प्रार्थ्यः किं तर्ह्यभ्युदयार्थिभिरपीत्याह—मा नस्तोक इति । हे रुद्र नोऽस्माकं संबन्धिनि तोके पुत्रे तनये पौत्रे च मा रीरिषस्तद्विषयां हिंसां मा कार्षीः । मा न आयौ मा न आयुषि मा नो गोषु मा नो गवादिषु तथा नोऽस्माकं वीरानपि भामितः क्रोधितस्तैरपचारेण क्रोधितो मा वधीः । वयं हविष्मन्तो भूत्वा सदमित्सदैव त्वा हवामहे रक्षणार्थमाह्वयामः ॥ २२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य
विज्ञानभगवतः कृतौ श्वेताश्वतरोपनिषद्विवरणे
चतुर्थोऽध्यायः ॥ ४ ॥



---

अथ पञ्चमोऽध्यायः ।

—:*:—

विद्याविद्ययोः परमेश्वरतन्त्रत्वमविद्यास्वरूपं विद्यास्वरूपं परमेश्वरस्य विद्याविद्येशितृत्वं तदस्पृष्टत्वं चेत्याद्यपूर्वार्थं वक्तुं पञ्चमोऽध्याय आरभ्यते । प्रथमं विद्याविद्ये अधिकृत्याऽऽह—द्वे अक्षरे इति । द्वे विद्याविद्ये अक्षरे न क्षरतीत्यक्षरं सर्वमश्नुत इति वाऽक्षरमक्षरात्मके अक्षरे ब्रह्मपरे ब्रह्मणो हिरण्यगर्भात्परे । अथवा ब्रह्म च तत्परं चेति ब्रह्मपरं तस्मिन्ब्रह्मपरे परब्रह्मणीति यावत् । छान्दसः परनिपातः । तुशब्दोऽवधारणार्थः । तस्मिन्परब्रह्मण्येवानन्तेऽद्वितीये विद्याविद्ये अक्षरे इति विशेष्यत्वेनान्वयो दर्शितः । निहिते निक्षिप्ते स्थिते परमेश्वराधीनस्वरूपप्रतिभासत्वान्नितरां स्थिते यत्र यस्मिन्गूढे स्वयंप्रकाशाखण्डसुखानुभूतित्वेनानभिव्यक्ते । विद्याविद्ययोर्लक्षणमाह—क्षरं त्विति । क्षरं त्वविद्या यद्यत्क्षरं क्षरणहेतुस्तत्तदविद्यैव । तुशब्दोऽवधारणार्थः । हि यस्मादमृतं तु विद्या यद्यदमृतत्वसाधनं तत्तद्विद्यैव । तुशब्दोऽवधारणार्थः । नित्यमोक्षपुरुषार्थप्रापकं यद्विद्यैव सा स्वर्गाद्यनित्यफलहेतुः

---

१ ख. °स्मिन्ब्रह्म° । २ ग. °से प° ।

कर्माविद्या नित्यमोक्षपुरुषार्थहेतुः शमाद्युपबृंहितश्रवणादिर्विद्या यस्मात्तस्मान्नित्यपुरुषार्थेप्सुभिः कर्माणि संन्यस्य शमाद्युपबृंहितश्रवणादिरेवाऽऽश्रयितव्य इत्यभिप्रायः। विद्याविद्ये ईशते यस्तु। एवंभूते विद्याविद्ये ईशत ईष्टे नियमयति यः परमेश्वरः। तुशब्दश्चार्थे। यत्र विद्याविद्ये निहिते यश्च विद्याविद्ये ईष्टे सोऽन्यः स ताभ्यामन्यो विद्याविद्ययोः स्वरूपप्रदतयाऽधिष्ठानत्वात्साक्षितया नियन्तृत्वाच्च ताभ्यामन्यः ॥ १ ॥

परमेश्वरस्य मूलप्रकृत्यधिष्ठातृत्वं सर्वशरीराधिष्ठातृत्वमवान्तरप्रकृतीनामधिष्ठातृत्वं हिरण्यगर्भस्रष्टृत्वं तस्य विद्याप्रदातृत्वं चाऽऽह—योऽयोनिमिति। यः सत्यसुखानुभूतिः परमेश्वरोऽयोनिं योनिमनादिसिद्धां मायाख्यां मूलप्रकृतिं स्वरूपस्फुरणप्रदत्वेनाधितिष्ठति। एकोऽद्वितीयो विश्वानि सर्वाणि रूपाणि शरीराणि योनीश्च सर्वा वियदाद्याः समष्टिरूपास्तद्व्यष्टिरूपा अवान्तरयोनीश्च सर्वाः सत्तास्फुरणप्रदत्वेनाधितिष्ठति। ऋषिमप्रतिहतज्ञानं प्रसूतं स्वेनोत्पादितं कपिलं कनकवर्णं हिरण्यगर्भमिति यावत्। यः परमेश्वरोऽग्रे सृष्टिकाले ज्ञानैर्धर्मज्ञानवैराग्यैश्वर्यैर्वेदतदर्थपरिज्ञानैर्वा युक्तं बिभर्ति बभार तं च जायमानं पश्येदवान्तरसर्गस्थित्यन्तकर्तृत्वेन वेदसंप्रदायकर्तृत्वेन च पश्येद्ददर्श स एव मुमुक्षुभिरात्मत्वेन ज्ञातव्य इति वाक्यशेषः ॥ २ ॥

अन्तःकरणसमष्टिं प्राणसमष्टिं चक्षुरादिज्ञानेन्द्रियसमष्टिं वागादिकर्मेन्द्रियसमष्टिं च स्वमायया सृष्ट्वा तदवस्थापन्नस्य परमेश्वरस्य तत्तद्व्यष्टीनां स्रष्टृत्वं तत्तदुपाध्युपहितानां घटाकाशजलचन्द्रस्थानीयानां हिरण्यगर्भप्रमुखाणां जीवानां महाकाशबिम्बस्थानीयस्य तस्यैवेश्वरस्य कारणत्वं सर्वाधिपतित्वं चाऽऽह—एकैकमिति। एकैकं जालं समष्टिरूपकार्यकारणानि[1] जालानि[2] पुरुषमत्स्यानां बन्धनत्वाज्जालवज्जालम्[3]। एकैकमन्तःकरणसमष्टिरूपं प्राणसमष्टिरूपं ज्ञानेन्द्रियसमष्टीनामेकैकं कर्मेन्द्रियसमष्टीनां च मध्य एकैकं जालं स्थूलसमष्टिरूपं[4] च जालं तत्तज्जालावस्थापन्नः सन्बहुधा विकुर्वंस्तत्तत्कर्मोपासनानुगुणतया बहुधाऽनन्तव्यष्टिरूपकार्यकरण[5]प्रकारेण विकुर्वंस्तत्तद्विपरीतत्वेन सृष्टिकाले कुर्वन्यस्मिन्क्षेत्रे मूलप्रकृतिलक्षणे क्षेत्रे संहरति सर्वं महाप्रलयादावेष प्रकृतो देवो द्योतनस्वभाव ईश्वरो यस्मिन्मायाख्ये क्षेत्रे सर्वं संहृतवांस्तस्मान्मूलकारणादेकं जालं बहुधा विकुर्वन्नास्त इत्यर्थः। भूयो व्यष्टिसमष्टिरूपकार्यकारणो[6]पाधीन्सृष्ट्वाऽ-

१ ख. घ. °रूपं का°। २ ख. °र्यकर°। ३ ख. ग. °ज्जालानि। ए°। ४ क. °पं मशकपर्यन्ताज्जालं। ५ क. °र्यकार°। ६ ख. °र्यकर°।

नन्तरं पतयः पतींश्च तुश्चार्थे समष्टिरूपकार्यकारणपतीन्स्वामिनो हिरण्यगर्भप्रमुखान्मशकपर्यन्तान्स्रष्ट्वाऽथानन्तरमीश्वरः सर्वाधिपत्यमुपाधीनामुपाहितानां च सर्वेषामाधिपत्यमाधिपतित्वमप्रतिषिद्धनियन्तृत्वं कुरुते महात्मा महांश्चासावात्मा चेति महात्मेश्वरः ॥ ३ ॥

परमेश्वरस्य सर्वज्ञाखण्डस्वयंप्रकाशबोधवपुष्ट्वं सर्वनियन्तृत्वं चाऽऽह—सर्वा दिश इति । सर्वा दिशः प्राच्याद्याश्चतस्रो दिशस्तद्वर्तिनः सर्वपदार्थांश्चोर्ध्वमूर्ध्वदिशं तद्वर्तिनः सर्वपदार्थांश्चाधश्चाधोदिशं तद्वर्तिनः सर्वपदार्थांश्च तिर्यक्प्रदिशश्चतस्रस्तत्स्थान्सर्वपदार्थांश्च प्रकाशयन्स्वात्मचैतन्यज्योतिषा भासयन्भ्राजतेऽखण्डस्वयंप्रकाशबोधवपुष्ट्वेन दीप्यते । यदु इत्यनर्थको निपातः । यद्यथेति यावत् । अनड्वानादित्यो जगच्चक्रवाहने युक्तत्वाद्यथाऽऽदित्यः प्राच्याद्या दश दिशः स्वप्रभया प्रकाशयन्भ्राजत एवं स प्रकृतो देवोऽखण्डचिदेकरसः सर्वं प्रकाशयन्भ्राजते भगवान्समग्रैश्वर्यवीर्ययशःश्रीज्ञानवैराग्यसंपन्नो वरेण्यो वरणीयोऽभ्युदयमोक्षकाङ्क्षिभिः संभजनीयो योनिः सर्वस्य जगतो मूलकारणं च स्वभावान्वियत्प्रमुखानणुपर्यन्तान्हिरण्यगर्भप्रभृतीन्स्तम्बपर्यन्तांश्च सर्वान्पदार्थस्वभावानधितिष्ठत्यन्तर्यामिरूपेण नियमयति च । एकोऽत एवाद्वितीयो योनिस्वभावान्कारणस्वभावान्करणभूतान्मूलप्रकृत्यवान्तरप्रकृतीः स्वरूपस्फुरणप्रदत्वेनाधितिष्ठतीति वा ॥ ४ ॥

परमेश्वरस्य मूलप्रकृत्यवान्तरप्रकृतीः प्रति तत्तत्कार्योन्मुखत्वेन पाचकत्वं तत्तत्कार्यरूपेण परिणामयितृत्वं सर्वनियन्तृत्वं जीवैः संचितपुण्यपापानुगुणतया सत्त्वरजस्तमसां विनियोजयितृत्वं चाऽऽह—यच्चेति । यच्च यश्चेति लिङ्गव्यत्ययः । यश्चेश्वरः सर्वं प्रकाशयन्नन्तर्बहिर्व्याप्यावस्थितः स्वभावं भूतानां स्वभावं स्वरूपं स्वसत्तासंनिधिमात्रेण पचति तत्तत्कार्यानुगुणं पक्वं करोति । विश्वयोनिर्विश्वस्य जगतो योनिरधिष्ठानत्वेन स्थानं कारणमथवा विश्वयोनिर्विश्वा योनयो यस्य नियम्याः स विश्वयोनिः पाच्यांश्च सर्वान्पाकयोग्यान्सर्वान्कर्मफलादींस्तेजःपाकवशेन तत्तदवस्थारूपेण स्वसत्तासंनिधिमात्रेण परिणामयेद्य ईश्वरः सर्वमेतद्विश्वं सर्वं विभक्तमेतद्दृश्यं विश्वं निःशेषमधितिष्ठत्यन्तर्यामिरूपेण नियमयति चैकोऽत एवाद्वितीयो गुणांश्च सर्वान्सत्त्वादिकान्गुणान्पुण्यपापानुगुणतयाऽध्यात्मादिभेदाभिन्नभूतेषु विनियोजयेद्य ईश्वरः स

---

१ ख. घ. °र्यकर° । २ क. °तित्वं नि° । ३ घ. °वान्कार° ।

एवं सकारणसंसारविनिवृत्तये स्वात्मत्वेन वेदितव्यो नान्य इति वाक्यशेषः। अथवा यच्छब्दस्योत्तरमन्त्रगतेन तच्छब्देन संबन्धो द्रष्टव्यः ॥ ५ ॥

परमेश्वरस्य वेदान्तेषु गूढत्वं वेदान्तानां कारणत्वं हिरण्यगर्भवामदेवप्रमुखैर्देवैर्ऋषिभिश्चाऽऽत्मतयाऽपरोक्षीकृतत्वमात्मतयाऽपरोक्षीकृतेश्वरतत्त्वानां स्वरूपतया निरतिशयानन्दाविर्भावलक्षणं निःशेषसंसारनिवृत्तिलक्षणं मोक्षं चाऽऽह—तद्वेदेति। तत्प्रकृतमीश्वरतत्त्वं वेदगुह्योपनिषत्सु वेदे कर्मभागे यष्टव्यत्वेन फलदातृत्वेन चावस्थितं गुह्य आरण्यके सगुणभाग उपास्यत्वेनावस्थितमुपनिषदि निर्गुणभागे ज्ञेयत्वेन चावस्थितं गूढं गुह्यरूपेणावस्थितम्। अथवा वेदश्चासौ गुह्यश्चेति वेदगुह्यस्तस्मादपि रहस्यभूतोपनिषत्सु वेदान्तेषु गूढं तच्छक्तितात्पर्याभ्यां प्रमेयत्वेन संवृतं तद्ब्रह्मा वेदते तद्गूढमीश्वरतत्त्वं ब्रह्मा हिरण्यगर्भो वेदते जानात्यात्मतया साक्षात्करोति ब्रह्मयोनिं वेदकारणं हिरण्यगर्भकारणं वा ये पूर्वं ये शमदमादिसाधनसंपन्नाः पूर्वकाले देवा अग्न्यादित्यादय ऋषयो वामदेवादयश्च तत्तत्पदार्थभूतं परमात्मतत्त्वं स्वात्मत्वेन विदुरपरोक्षीकृतवन्तस्तेऽपरोक्षीकृतपरमात्मतत्त्वास्तन्मया अनुदिताविद्या अनस्तमितानन्दस्वभावेश्वरमया ईश्वरस्वरूपभूताः सम्यग्ज्ञानेनेश्वरभावव्यवधायकाविद्यातत्कार्यदाहात्तन्मया अमृता अमरणधर्माणो जननमरणादिसंसाररहिताश्च बभूवुः। ब्रह्मैव सन्ब्रह्माप्येति ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्यन्तरात्। वा इति शास्त्रप्रसिद्धिं न्यायप्रसिद्धिमनुभवप्रसिद्धिं च दर्शयति ॥ ६ ॥

तत्पदार्थभूतस्येश्वरस्य सत्यसुखसंविन्मात्ररसत्वमद्वितीयत्वमखण्डत्वं वेदान्तगम्यत्वमविकारित्वं प्रत्यक्त्वं चोपदिश्येदानीं त्वंपदार्थभूतस्य जीवस्य कार्यकरणादिभ्यो वैलक्षण्यं सत्यसुखानुभूतित्वमसङ्गत्वं नित्यत्वं परमात्मस्वरूपत्वं च प्रतिपादयितुमुत्तरे केचिन्मन्त्राः प्रस्तूयन्ते। तत्र प्रथमं जीवस्य कर्तृत्वभोक्तृत्वादिसंसारः स्वाभाविको न भवति किंतु देहेन्द्रियाद्युपाध्यविवेककृत इत्याह—गुणान्वय इति। गुणान्वयः सत्त्वरजस्तमआख्यैर्गुणैरन्वयो यस्य स गुणान्वयः फलकर्मकर्तेषद्रजोन्वितसत्त्वगुणपरवशः सञ्ज्ञानद्वारेण मोक्षार्थं कर्म करोति। ईषत्सत्त्वान्वितरजोगुणपरवशः सन्स्वर्गादिफलसाधनं कर्म करोति। ईषद्रजोन्विततमोगुणपरवशः सन्नरकादिसाधनं कर्म करोति। एवं गुणपरवशः सन्फलार्थस्य कर्मणः कर्ता कृतस्य स्वकृतस्य तस्यैव कर्मणः फलस्य यः फलार्थं कर्मोक्तप्रकारेण करोति स एवोपभोक्ता च यो गुणपरवशो भूत्वा फलार्थानि

---

१ क. घ. °व कारणं सं°। २ क. °र्भविभा°। ३ ख. यष्टृत्वे°। ४ क. घ. °र्यकार°।

कर्माण्युपचिनोति स स्वकृतकर्मभिः सुरनरतिर्यगादिनानारूपतया वर्तमानत्वाद्विश्वरूपस्त्रिगुणः कामक्रोधलोभाख्यास्त्रयो गुणा यस्य स त्रिगुणः । त्रिवर्त्मा देवयानपितृयाणतिर्यङ्मार्गाख्यास्त्रयो मार्गभेदा अस्येति त्रिवर्त्मा । प्राणाधिपः प्राणादिपञ्चवृत्तेर्मुख्यप्राणस्य करणाख्येतरप्राणानां चाधिपः स्वामी कार्यकरणस्वामीति यावत् । संचरति स्वकर्मभिरेकादशेन्द्रियभूतसूक्ष्मपञ्चकप्राणाख्यसप्तदशकात्मकं लिङ्गशरीरमात्मसाक्षात्कृत्य तदुपाधिकः सन्सत्त्वादिकामादिगुणपरवशो भूत्वा शुभाशुभानि कर्माणि कृत्वा तैः स्वकर्मभिः परवशो भूत्वोदधिमध्यवर्तिशुष्कालाबुवत्संसारदुःखमहोदधौ संचरति संचरते परिभ्रमति । छान्दसं परस्मैपदम् ॥ ७ ॥

अद्वितीयेश्वर एव जीवो नान्य इति जीवस्य जीवत्वभेदपरिच्छेदकर्तृत्वादेरौपाधिकत्वेनाऽऽभासत्वं ज्ञाताज्ञाततया सर्वसाक्षित्वात्स्वयंप्रकाशाखण्डबोधैकरसत्वं चाऽऽह—अङ्गुष्ठमात्र इति। अङ्गुष्ठमात्रोऽङ्गुष्ठमात्रपरिमिते हृदयपुण्डरीककुहरे वर्तमानत्वादङ्गुष्ठमात्रो न तु स्वतोऽङ्गुष्ठमात्रपरिमाणपरिमितः। रवितुल्यरूप इदं जानामीतिज्ञाततया तदतिरिक्तं सर्वं न जानामीत्यज्ञाततया च ज्ञातृज्ञानज्ञेयादिसर्वस्य साक्षित्वादनवच्छिन्नचित्प्रकाशरूपः संकल्पाहंकारसमन्वितो मनउपाधित्वात्तद्धर्मसंकल्पसमन्वितोऽहंकारोपाधिकत्वात्तद्धर्माभिमानसमन्वितो यः संकल्पाहंकारसमन्वितो रवितुल्यरूपश्च यः स बुद्धेर्लिङ्गशरीरस्य गुणेन परिच्छेदभेदादिनाऽऽत्मगुणेन स्वस्वरूपभूतचिद्गुणेन चैव बुद्धिधर्मपरिच्छेदेनैवाऽऽराग्रमात्रो न स्वतः । आरा प्रतोदस्तदग्रपरिमाणः स्वस्वरूपभूतचिद्गुणेनैव दृष्टो नान्येनैव दृष्टः प्रकाशितो दीप्तोऽवरो महाकाशस्थानीयपरमेश्वरापेक्षयाऽपरोऽपि च भवति ॥ ८ ॥

अविद्याद्युपाधिकत्वाज्जीवस्य तस्योक्तपरिच्छेदस्यौपाधिकत्वेनाऽऽभासत्वं स्वतोऽद्वितीयत्वं चाऽऽह—बालाग्रेति । बालग्रस्य यः शततमो भागस्तस्य पुनरपि शतधा विभक्तस्य यो भागः स यथा सूक्ष्मस्तद्वत्स जीवोऽतिसूक्ष्म उपाध्यवच्छिन्नरूपेण सूक्ष्मो विज्ञेयः स चाऽऽनन्त्याय कल्पते। चकारोऽवधारणे। स जीव आनन्त्यायैव कल्पते स्वरूपेणाद्वितीय एव भवति ॥ ९ ॥

स्वत ईश्वरभूतस्य जीवस्य लिङ्गशरीरोपाधिकत्वं तद्धर्मभेदादिभाक्त्वं चोक्त्वेदानीं स्वतः स्थूलदेहतद्धर्मशून्यत्वं स्वाविद्यया स्थूलदेहोपाधिकत्वं तत्तद्धर्मभाक्त्वं चाऽऽह—नैव स्त्रीति । अनास्कन्दिताशेषविशेषानन्तसुखसंविन्मा-

---

१ क. °स्य कार° । २ क. °यंकार° । ३ ख. ग. °धिकत्वा° ।

त्रैकरसेश्वरस्वरूपत्वात्स्वत एष जीवो नैव स्त्रीत्वादियुक्तः किंत्वविद्याकामकर्मादिवशाद्यद्यच्छरीरं मिथ्याभिमानादादत्ते स्वी कुरुते तेन तेन स्त्र्यादिरूपेण तत्तद्धर्मकृशत्वादिरूपेण च स विज्ञानात्मा युज्यते संबध्यते। अहं स्त्र्यहं पुमानहं नपुंसकोऽहं जातोऽहं कृशोऽहं मृत इत्यादिमिथ्याभिमानपाशिततया संबध्यते। चशब्देन स्वतो निर्धूताशेषविशेषत्वं स्वाविद्यया विशेषभाक्त्वं च प्रदर्श्यते ॥ १० ॥

आत्मनः कार्यकरणोपाधिपरिग्रहे कर्तृत्वादिसंसारधर्मभाक्त्वे च किं निमित्तमित्याकाङ्क्षायामाह—संकल्पनेति। संकल्पनं मनसो व्यापारस्तीर्थेभ्योऽन्यत्र भूतहिंसां न कुर्यामित्येवमादिरूपः पुण्यहेतुर्भवति। स एव तीर्थेभ्योऽन्यत्र हिंसां कुर्यामित्यादिरूपश्च पापहेतुश्च भवति तेन संकल्पनेन। स्पर्शनं त्वागिन्द्रियव्यापारो गङ्गोदकादिस्पर्शनं पुण्यहेतुर्भवति। चाण्डालादिस्पर्शनं पापहेतुर्भवति तेन स्पर्शनेन। दृष्टिश्चक्षुर्व्यापारः सतां दर्शनं पुण्यहेतुर्भवति। पतितादिदर्शनं पापहेतुस्तेन दर्शनेन। होमो हस्तव्यापारोऽग्निहोत्रादिहोमः पुण्यहेतुर्भवति। अभिचारादिहोमः पापहेतुस्तेन होमेन। इतरेन्द्रियव्यापाराणामप्युपलक्षणमेतत्। एतैः संकल्पनस्पर्शनदृष्टिहोमैर्ग्रासाम्बुवृष्ट्या च ग्रासवृष्ट्याऽम्बुवृष्ट्या च ग्रासवृष्ट्या ग्रासोऽन्नं वृष्टिरिति। अम्बुवृष्टिरुदकदानमुत्कृष्टदेशकालपात्रेष्वन्नाम्बुनोरत्यादरेण दानमतिदानं पुण्यहेतुर्भवति विपरीतेष्वतिदानं पापहेतुः। अथवा यो ग्यायोग्येषु ग्रासप्रदानं पुण्यपापहेतुर्भवति। अम्बुदानं च तथा वृष्टिः। ओ व्रश्चू छेदने। अनर्थवतामनर्थोच्छेदनं पुण्यहेतुर्भवति। अर्थवतामर्थोच्छेदनं पापहेतुः। ग्रासेनाम्बुना वृष्ट्या च ग्रासाम्बुवृष्ट्या चाऽऽत्मविवृद्धिजन्माऽऽत्मन एतेषां कर्तुर्विवृद्धिजन्म विवृद्धिश्च जन्म च विवृद्धिजन्म हिरण्यगर्भादिस्तम्बपर्यन्तासु योनिषु जन्म च विवृद्ध्यादीतरभावविकारश्च भवति। विवृद्धिरित्युपलक्षणम्। इममेवार्थं स्पष्टतया व्यावर्णयति—कर्मानुगानीति। तत्कर्मानुसारीणि पुण्यानुसारीणि हिरण्यगर्भादिदेवशरीराख्याणि रूपाणि। पापानुसारीणि तिर्यग्रूपाणि समप्रधानतया वर्तमानपुण्यपापानुसारीणि मनुष्यशरीराण्यनुक्रमेणानुकर्मपाकमनुसृत्य क्रमेण देही लिङ्गशरीरोपाधिक आत्मा स्थानेष्वध्यात्मादिभेदभिन्नस्थानेषु ब्रह्मादिपिपीलिकान्तेषु रूपाण्युक्तलक्षणानि रूपाण्यभिसंप्रपद्यते। अभ्यभितः समष्टिव्यष्टिरूपः समस्तकार्यकरणान्यहंममाभिमानी भ्रान्त्या संप्रपद्यते संप्राप्नोति ॥ ११ ॥

---

१ क. ख. °सकमहं। २ क. °त्यादिका°। ३ ख. °नं मान°। ४ ग. °तुर्भव°। ५ क. °तुस्तेन। ६ घ. ग्रासो°। ७ क. °यैकार°। ८ ख. °मानभ्रा°।

पूर्वमन्त्रे व्याप्यत्वेनोक्तरूपाणां स्वरूपप्रकारं संसारभजनप्रकारं चाऽऽह—स्थूलानीति । स्थूलानि पार्थिवानि शरीराणि भूर्लोकवर्तीनि ततः सूक्ष्माण्यम्मयानि भुवर्लोकवर्तीनि शरीराणि ततोऽपि सूक्ष्माणि तैजसानि स्वर्लोकवर्तीनि शरीराणि ततोऽपि सूक्ष्माणि वायवीयानि महर्लोकजनोलोकवर्तीनि शरीराणि ततोऽपि सूक्ष्माणि शरीराणि वियन्मयानि तपःसत्यलोकवर्तीनि सर्वशरीरारम्भे सर्वभूतान्यारम्भकतया वर्तन्त एव । अतस्तत्तल्लोकवर्तितत्तच्छरीरारम्भे तत्तद्भूतप्राधान्यमेवोक्तामिति द्रष्टव्यम् । अथवा स्थूलानि हस्त्यादिशरीराणि सूक्ष्माणि मशकादिशरीराणि बहून्यनेकान्यनेकरूपाणि शरीराणि देही विज्ञानात्मा स्वगुणैः स्वस्मिन्नध्यस्तत्वात्स्वकीयाऽविद्या तस्या गुणैः सत्त्वरजस्तमोभिरथवा स्वस्याऽऽत्मनो गुणैस्तत्तदुपाध्यवच्छिन्नतया वर्तमानैः सत्तास्फुरणादिभिर्वृणोति संभजते क्रियागुणैः श्रौतस्मार्तविहितप्रतिषिद्धाक्रियाजन्यधर्माधर्मलक्षणापूर्वैश्चाऽऽत्मगुणैरात्मा लिङ्गशरीरं तस्य गुणैर्विहितप्रतिषिद्धोपासनादिभिश्च वृणोतीति पूर्वत्रान्वयः । तं विद्याकर्मणी समन्वारभेते इति श्रुत्यन्तरात् । तेषां कार्यकरणस्वामिनः कार्यकरणानां तद्धर्माणां च तेषां संयोगहेतुः संयोगस्य हेतुर्भोक्तृभोगोपकरणभोगायतनादिभावेनान्वयहेतुर्निमित्तमपर उक्तेभ्योऽपरोऽन्योऽपि दृष्टः पूर्वप्रज्ञाख्यः श्रुतौ दृष्टः । पूर्वप्रज्ञा चेति चशब्दस्थानेऽत्रापि चशब्द इति द्रष्टव्यम् ॥ १२ ॥

त्वंपदार्थभूतजीवस्य संसरणप्रकारमुक्त्वेदानीं तस्य नेति नेतीतिप्रतिषिद्धाशेषविशेषानन्तसत्यसुखचिन्मात्ररूपतत्पदार्थैक्यज्ञानान्मोक्षसिद्धिमाह—अनाद्यनन्तमिति । अनाद्यनन्तमाद्यन्तशून्यं कलिलस्यातिगहनसंसारचक्रस्य मध्ये साक्षित्वेनावस्थितं विश्वस्य विश्वप्रपञ्चस्य स्रष्टारं स्वाविद्ययोत्पादयितारं तच्छब्दार्थभूतमनेकरूपं त्रिकोणत्वाद्यनेकावस्थापन्नायःपिण्डानुगतवह्निवद्ब्रह्मादिस्थावरान्तकार्यकरणोपाधिषु जले चन्द्रवदनुप्रविश्य तत्तद्रूपेणावभासमानं विश्वस्य प्रकृतिप्राकृतरूपस्य विश्वस्य परिवेष्टितारं परितोऽन्तर्बहिश्च स्वोपप्रदर्शितव्याघ्रादेर्मायाविवत्स्वस्मिन्कल्पितरजतादेः शुक्त्यादिवद्वेष्टयितारं व्याप्तारमंत एवैकमद्वितीयं देवं द्योतनस्वभावं चिन्मात्रैकरसं ज्ञात्वाऽऽत्मत्वेनापरोक्षीकृत्य मुच्यते सर्वपाशैः प्रकृतिप्राकृताख्यैः सर्वैः पाशैर्मुच्यते । अनन्तसत्यसुखै-

१ ख. घ. व्याप्तत्वे° । २ क. ग. घ. भूलोक° । ३ क. ख. °जनलो° । ४ क. ख. °मानः स° । ग. °मानस° । ५ क. °र्थकार° । ६ क. °र्थकार° । ७ क. °र्यकार° । ८ ग. °श्च स्वाप° । ९ ख. °वैकं तम° । १० ख. ग. °त्वा स्वात्म° । ११ ख. °खसंवि° ।

चिन्मात्रतया स्वात्मापारोक्ष्यादविद्यातत्कार्यरूपाः सर्वे पाशा बाधिता भवेयुरित्यर्थः ॥ १३ ॥

परमेश्वरस्य परिशुद्धान्तःकरणग्राह्यत्वं निराधारत्वं जगदुत्पत्तिलयहेतुत्वं कलाहेतुत्वं तदैक्यज्ञानान्मोक्षहेतुत्वं चाऽऽह—भावग्राह्यमिति । भावग्राह्यं परिशुद्धान्तःकरणग्राह्यमनीडाख्यं नीडं शरीरं तद्रहितत्वेनोपनिषत्स्वाख्यायमानमथवा नीडं स्थानमाख्याऽभिधानं ते नीडाख्ये अस्य न विद्येते इत्यनीडाख्यं भावाभावकरं जगतो भावाभावयोः सृष्टिसंहाराख्ययोः कर्तारं शिवं जडतद्विशेषमलैरनास्कन्दितं सुखरूपं कलासर्गकरं कलया स्वमायया शक्त्या समस्तभूतसर्गकरम् । अथवा कलानां षोडशकलानां प्राणादिनामान्तत्वेनाऽऽथर्वणोक्तानां सृष्टिकरं कलानां वेदानामितरविद्यानां च सृष्टिकरमिति वा । देवमनुभूत्यैकरसं ये नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमादिमुमुक्षुत्वाख्यसाधनचतुष्टयसंपन्ना विदुरपरोक्षी कुर्युस्ते चापरोक्षीकृतेश्वरभावास्तनुं प्रकृतिप्राकृतरूपां जहुस्त्यजन्ति । ईश्वराभेददर्शनेन प्रकृतिप्राकृतरूपा तनुर्बाधिता भवेदिति यावत् ॥ १४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपाद-
शिष्यस्य विज्ञानभगवतः कृतौ श्वेताश्वतरोपनि-
षद्विवरणे पञ्चमोऽध्यायः ॥ ५ ॥

=====

अथ षष्ठोऽध्यायः ।

---

परमेश्वरस्यानादौ संसारे पूर्वपुण्यानुसारेण सर्वेषां प्राणिनां पुण्यहेतुत्वं स्वप्रणतानामधर्मनाशकत्वमीश्वराणामीश्वरत्वं देवानामपि देवत्वं स्वाधिकसमशून्यत्वमनन्यपतित्वमनन्येश्वरत्वं सर्वभूतेषु समत्वेनावस्थानं निर्गुणत्वमीश्वराभेददर्शिनामेव नित्यसिद्धपुरुषार्थसिद्धिमितरेषां तदसिद्धिं लोके नित्यत्वेन प्रसिद्धानां नित्यहेतुत्वं चेतनत्वेन प्रसिद्धानां चेतनहेतुत्वं परमेश्वरस्य सम्यग्ज्ञानैकलभ्यत्वमादित्यादिप्रकाशैरप्रकाश्यत्वं सर्वप्रकाशकत्वं मोक्षस्य जीवेश्वरै-

---

१ क. °ज्ञानमोक्ष° । घ. °ज्ञानस्य मोक्ष° । २ ख. ग. °न्मोक्षं चा° । ३ क. घ. °न्दितसु° । ४ ख. ग. °णादीना° । ५ ख. ग. °न्तरत्वे° । ६ क. °नां विद्याना° । ७ ख. ग. °प्रवणाना° । ८ ख. घ. त्यत्वे हे° ।

कत्वज्ञानैकलभ्यत्वं तद्व्यतिरिक्तसाधनैरलभ्यत्वमीश्वरस्य निरङ्कुशासङ्गकूटस्थबोधैकवपुष्ट्वमीश्वरैकत्वज्ञानमन्तरेण मोक्षस्यात्यन्तमसंभाव्यमानत्वमित्येवमाद्यर्थकलापं वक्तुं षष्ठोऽध्यायः प्रवर्तते। प्रथमेऽध्याये कालादीनां संसारचक्रहेतुत्वमनूद्य परमेश्वरस्य हेतुत्वमुक्तमिदानीं तेषामपि परमेश्वरमायाविजृम्भितत्वमाह—स्वभावमेक इति । स्वभावमेके कवयः स्वभावं पदार्थानां स्वभावं स्वं स्वं भावमेके कवयः स्वप्रज्ञाध्वान्तचेतसः संसारचक्रस्य कारणं वदन्ति । कालं कारणमित्यन्ये वदन्ति । स्वभावमिति वेदबाह्यजगत्कारणवादानामुपलक्षणम् । कालमिति । वैदिकपक्षमवलम्ब्यैव तस्माद्भ्रष्टानामुपलक्षणम् । परिमुह्यमानाः स्वपक्षस्थापनाभिनिवेशे[2] कर्कशवादवशीकृतचेतस्तया सम्यक्पक्षमजानन्तोऽन्योन्यबाधितपक्षाभासानवलम्ब्य परिमुह्यमाना एवमाहुः । तुशब्द एतान्पक्षान्व्यावर्तयति । देवस्यैष महिमा येनेदं भ्राम्यते ब्रह्मचक्रं येन कालादिनेदं दृश्यं भ्राम्यते परिवर्त्यते। बृहत्वाद्ब्रह्म चक्रत्वेन घटीयन्त्रवद्वर्तमानत्वात्तदेवं चक्रं ब्रह्मचक्रं येन कालादिना भ्राम्यत इति वादिभिः कल्पितैमेव जगच्चक्रनिर्वोढृत्वेन लोके वादिभिः परिगृहीतः कालादिर्देवस्य स्वयंप्रकाशचिदेकरसस्य परमेश्वरस्य महिमा वादिभ्रमगृहीतकारणान्यपि परमेश्वरमायया विजृम्भितान्येवेत्यर्थः ॥ १ ॥

परमेश्वरस्यैव सर्वव्यापकत्वेन ज्ञातृत्वं सर्वस्रष्टृत्वं नान्यस्येत्याह—येनाऽऽवृतमिति । येन माययैक्याध्यासमुपगतेन परमेश्वरेण सच्चिद्रूपेणेदं दृश्यं वियदादि सर्वमस्ति स्फुरतीति[3] चाऽऽवृतं व्याप्तमीश्वरेणैक्याध्यासमुपगतेन मायावशेन तद्विवर्ततयेदं सर्वं जडमचेतनमिति च व्याप्तम् । एवं मायामिलिततया कारणभूतेन परमेश्वरेणेदं सर्वमावृतं नियमेन महाप्रलयादावैक्येन स्थित्यवस्थायां तादात्म्येन चाऽऽवृतं ज्ञः सर्वसामान्येषु सर्वव्यक्तीरन्तर्भाव्य सामान्यप्रधानतया सर्वं सर्वदा जानातीति ज्ञः । कालः सृजति भूतानि कालः संहरति प्रजाः । सर्वे कालस्य वशगा न कालः कस्यचिद्वश इत्युक्तः कालस्य महिमा यः स परमेश्वराधीन एव न स्वत इत्याह—कालकाल इति । कालस्यापि कालो नियन्तोपहर्ता च गुण्यपहतपाप्मत्वादिगुणको मायाशक्तिगुणको वा सर्ववित्सर्वाणि सामान्यानि व्यक्तिष्वन्तर्भाव्य व्यक्तिप्राधान्येन सर्वदा[6] सर्वमपरोक्षतया जानातीति सर्वविद्यः । यः सर्वज्ञः सर्वविदितिश्रुत्यन्तरात् ।

---

१ ख. °रस्येव हे° । २ क. घ. °वेशक° । ३ ख. °व चेदं च° । ४ क. घ. °तामिव । ५ क. घ. °ति वाऽऽवृ° । ६ ख. ग. सदा ।

योऽनन्तसुखानुभूतिः सर्वा विद्या अस्येति सर्वविद्य इति वा । अनेनैवंभूतेन परमेश्वरेणेशितं नियमितं कर्म क्रियत इति कर्म कार्यजातं विवर्तते । तत्त्वविपरीतमिथ्याज्ञानपरिणामो विवर्तस्तद्रूपमापद्यते । ह प्रसिद्धौ । विवर्तक्रममाह—पृथिव्यप्तेजोनिलखानि चिन्त्यमिति पाठक्रमादर्थक्रमस्य बलीयस्त्वात्स एवेहाऽऽश्रयणीयः । आत्मन आकाश इत्यादिश्रुत्यन्तरात्प्रथममीश्वरेण नियमितमीश्वरमायायाऽऽकाशाख्यं कर्म विवर्तते । एवं ततो वायुस्ततस्तेजस्तत आपस्ततः पृथिवी ततो भौतिकं सर्वमिति चिन्त्यम् । लोके कारणत्वेन प्रसिद्धानां वादिप्रसिद्धानां च कारणानां सर्वेषां मायोपाधिकपरमेश्वरविवर्तत्वमेव न तु स्वातन्त्र्यमिति चिन्त्यं परीक्षकैरिति वाक्यशेषः ॥ २ ॥

सम्यग्ज्ञानसाधनपरम्परां सम्यग्ज्ञानप्रकारं चाऽऽह—तत्कर्म कृत्वेति । तत्कर्म कृत्वा तदर्थं कर्म तत्कर्म कर्मी स्वेन यद्यत्कर्म क्रियते तत्तत्सर्वं कर्मेश्वरसमाराधनबुद्ध्या कृत्वाऽनुष्ठितकर्मवृन्देन निर्मलान्तःकरणो यो भूयः पुनर्विनिवृत्य सर्वकर्मभ्यो विनिवृत्य सर्वकर्मसंन्यासं कृत्वा तत्त्वस्य कार्यकरणसंघातसाक्षित्वादवस्थात्रयेऽप्यनपायिस्वरूपत्वादवस्थात्रयसाक्षित्वाच्च तेभ्यो व्यतिरिक्तस्य त्वंपदार्थभूतस्याऽऽत्मतत्त्वस्य तत्त्वेन तत्पदार्थभूतपरमेश्वरतत्त्वेन समेत्य योगमैक्यलक्षणं योगं समेत्य सम्यक्प्राप्यापरोक्षीकृत्येति यावत् । कैः पुनः साधनैरीश्वरैकत्वज्ञानं समुत्पद्यत इत्यपेक्षायामाह—एकेनेति । एकेन गुरूपसदनेन द्वाभ्यां गुरुभक्तीश्वरभक्तिभ्यां त्रिभिः श्रवणमनननिदिध्यासनैरष्टभिर्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिः । वाशब्दश्चार्थे । कालेनेह जन्मनि जन्मान्तरे वा ज्ञानार्थमनुष्ठितसाधनकलापपाककालेनाधिकारसंपत्तिर्यदा तत्तत्कालेनेति वा । आत्मगुणैश्च दयाक्षान्तिशौचमाङ्गल्यास्पृहाकार्पण्यानायासानसूयाख्यैरात्मगुणैः सूक्ष्मैरनेकजन्मसु ज्ञानार्थमनुष्ठितपुण्यसंस्कारैश्चत्वारिंशद्भिरेतैः साधनकलापैरात्मतत्त्वस्येश्वरतत्त्वेनैक्यलक्षणं योगं समेत्यापरोक्षीकृत्य मुक्तो भवतीति वाक्यशेषः ॥ ३ ॥

पूर्वोक्तमेवार्थं स्पष्टी करोति—आरभ्येति । आरभ्य कर्माणि नित्यनैमित्तिकानि गुणान्वितानीश्वरसमाराधनगुणान्वितान्यारभ्य कृत्वा तैर्गुणान्वितत्वेन स्वकृतैः कर्मभिः परिपक्वकषायः सन्सर्वपदार्थान्विनियोजयेदिति यतेः समाधिप्रकारकथनमिदं यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेराग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव

१ क. घ. °र्थंकार° । २ क. घ. °कारिसं° । ३ ख. °न च कृ° । ग. °न च स्व° ।

सत्यमितिश्रुत्यन्तरोक्तप्रकारेण स्थूलं व्यष्टिजातं स्थूलसमष्टिषु विनियोज्य तावन्मात्रतया वितर्क्य स्थूलसमष्टीरपि पञ्चीकृतपञ्चमहाभूतेषु विनियोज्य तावन्मात्रतया चिन्तयित्वा तेष्वप्युत्तरोत्तरभूतं पूर्वपूर्वभूतमात्रतया प्रविलाप्य तदपि तन्मात्रतया प्रविलाप्य तन्मात्रमप्युत्तरोत्तरतन्मात्रं पूर्वपूर्वतन्मात्रतया प्रविलाप्य तदपि मूलप्रकृतिमात्रतया प्रविलाप्य तामपि मायां सन्मात्रतया प्रविलाप्य तदपि चिन्मात्रतया बुद्ध्वा तामपि चितिमानन्दमात्रतया बुद्ध्वा तमप्यानन्दमद्वितीयमात्रतया बुद्ध्वाऽद्वितीयसच्चिदानन्दैकरसं वस्तु प्रत्यक्त्वेन विनियोजयेत् । इत्थं विनियोजयेद्यो यतिः स मोक्षं यातीति संबन्धः । तेषामभाव उत्तरोत्तरं कार्यं सर्वं पूर्वपूर्वकारणमात्रतया प्रविलाप्य मूलप्रकृतिभूतां मायां सच्चित्सुखैकरसेश्वरमात्रतया प्रविलाप्य तमीश्वरं स्वात्मतयाऽपरोक्षीकृत्यैवमीश्वरैकत्वापरोक्ष्यात्तेषां सर्वेषां प्रकृतिप्राकृतानामभावे दाहे सति कृतकर्मनाशोऽनादौ संसारे कृतस्य पुण्यपापाख्यस्य कर्मणोऽनारब्धफलस्य नाश एकत्वज्ञानाद्दाहः । सम्यग्ज्ञानादूर्ध्वकालभाविनां कर्मणां दग्धकर्तृत्वमूलत्वादश्लेषलक्षणो नाशः कर्मक्षय उपभोगेन प्रारब्धफलस्य कर्मणः क्षये याति विदेहमोक्षं याति देहेन्द्रियादिप्रतिभासनिवर्तकविद्याशक्तिप्रतिबन्धकप्रारब्धकर्मनाशेऽप्रतिबद्धशक्तिविद्यया[1] देहेन्द्रियादिप्रतिभासमपि[2] चिन्मात्रतया विलाप्य देहेन्द्रियादिप्रतिभासेनापि शून्यं विदेहमोक्षं यातीति यावत् । तत्त्वतोऽन्योऽवस्थात्रयसाक्षित्वादवस्थात्रयातीतोऽन्यः स प्रकृतः सर्वभावोपसंहर्ता तत्त्वतोऽहं ब्रह्मास्मीतिबुद्धिफलकारूढस्तद्बलात्[3]प्रकृतस्य कर्मणो नाशो भवति । प्रारब्धकर्मक्षये देहेन्द्रियादिप्रतिभासस्यापिदाहाद्विदेहमोक्षं यातीति यावत् । तत्त्वतोऽन्यदिति पाठे तत्त्वतः प्रकृतिप्राकृतेभ्यस्तत्त्वेभ्योऽन्यदीश्वरतत्त्वं यातीत्यर्थः । अथवाऽन्यत्सर्वदोषानास्कन्दितनिःसङ्गेश्वरतत्त्वं तत्त्वतः परमार्थतः[4] स्वात्मरूपं यथा भवति तथा यातीति यस्तस्येश्वरभावव्यवधायकप्रकृतिप्राकृतं सर्वमेकत्वज्ञानेनैकत्वमात्रतया विलयं यातीति यत्तद्यातीत्युच्यते ॥ ४ ॥

सम्यग्ज्ञानसिद्ध्यर्थमधिकारसिद्ध्यर्थं परमेश्वरोपासनमाह—आदिरिति । आदिः सर्वेषामादिः स्वरूपस्फुरणप्रदत्वेनाधिष्ठानभूतः स प्रकृतः परमेश्वरः संयोगनिमित्तहेतुः सम्यग्योगः संयोगो जीवस्य परेणैक्यापत्तिलक्षणस्तस्य[5]

---

१ क. घ. °बन्धकश° । २ क. घ. पि स चि° । ३ क. ग. °लात्कृत° । ४ ख. ग. °र्थत-स्वात्म° । ५ ख. °ति तस्ये° ।

निमित्तानां साक्षात्प्रनाड्या च प्रापकानामेकेन द्वाभ्यामित्यादिनोक्तानां हेतुः कारणभूतः। अथवा शरीरसंयोगनिमित्तानां पुण्यपापानां हेतुः परस्त्रिकालादतीतानागतवर्तमानलक्षणात्त्रिकालात्परोऽन्यः कालानवच्छिन्न इत्यर्थः। अकलः कला अवयवा अस्य न सन्तीत्यकलो निरंश इति यावत्। अथवा प्राणादिनामान्ताः परमार्थतोऽस्य न विद्यन्त इत्यकलः। अपिशब्दः पूर्वसमुच्चयार्थः। दृष्टः श्रुत्यन्तरेषु विद्वत्सु च दृष्टः प्रकाशितः। तमेवंभूतं विश्वरूपमुपासकैर्यद्यद्रूपमुपास्यते तत्तद्रूपधारिणम्। अथवा ब्रह्मादिपिपीलिकान्तानि वियत्प्रमुखाणुपर्यन्तानि च विश्वानि रूपाण्यस्येति विश्वरूपं भवभूतं भवश्चासौ भूतश्चेति भवभूतो भवत्यस्मात्सर्वमिति भवभूतोऽवितथस्वरूपस्तं भवभूतमीड्यं सर्वेषां स्तुत्यं देवं चित्प्रकाशरूपं स्वचित्तस्थं चित्ताख्यलिङ्गशरीरस्थं पूर्वं पूर्वमेव तस्मिन्प्रत्यक्तया स्थितमुपास्याहं ब्रह्मास्मीत्यपरोक्षीकृत्यान्तःकरणगुहायां पूर्वं जीवरूपेण स्थितं परमेश्वरमेहं ब्रह्मास्मीत्यपरोक्षीकृत्य मुक्तो भवतीति वाक्यशेषः। यातीति पूर्वत्र वा संबन्धः। अयं मन्त्र एव निर्गुणवस्तुपरतया कैश्चिद्व्याख्यातः। कैश्चिच्च सगुणवस्तुपरतया व्याख्यातः। अस्मिन्पक्षे स्वचित्तस्थं स्वचित्ते शास्त्रेण निवेशितमुपास्य विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपं तद्विषयोपासनं कृत्वा सम्यग्ज्ञानोदयात्पूर्वं सम्यग्ज्ञानाधिकारसिद्ध्यर्थं पश्चाच्च तेन लब्धसम्यग्ज्ञानाधिकारो भवतीत्येवं योजयितव्यम्॥ ५॥

परमेश्वरस्य संसारदोषास्पृष्टत्वं सर्वद्वैतकल्पनाधिष्ठानत्वं तद्धर्मप्रापयितृत्वं निरङ्कुशैश्वर्यत्वं तज्ज्ञानान्मोक्षसिद्धिं चाऽऽह—स इति। स प्रकृतः परमेश्वरो वृक्षकालाकृतिभिः पञ्चम्यर्थे तृतीया। वृक्षः संसारवृक्षस्तस्माल्लवादिसमस्तकालविशेषेष्वनुस्यूतं कालतत्त्वं कालशब्देनोच्यते। तस्मादाकृतिरा समन्तात्कृतिः क्रियत इति कृतिर्महदादिसमस्तकार्यरूपेण मायाख्या प्रकृतिः क्रियते निर्वर्त्यते प्रेर्यतेऽधिष्ठात्रा परमेश्वरेणेत्याकृतिरिति मूलप्रकृतिरुच्यते। सर्वव्यापकत्वाद्वा सैवाऽऽकृतिरित्युच्यते तस्याश्च परो ज्यायांस्तेभ्यो विलक्षणस्वभावश्च तेभ्योऽन्यः परः स्वयमुत्कृष्टश्चेति पदव्यत्ययेनैवार्थः। यस्मादनन्तसुखचिन्मात्रवपुष ईश्वरादयं प्रपञ्चः परिवर्तते स्वप्नद्रष्टारमवष्टभ्य तदुपदर्शितव्याघ्रादिप्रपञ्चः परिवर्तते यथा तद्वत्। यत्तदोर्नित्यसंबन्धात्। धर्मावहं यज्ञदानत-

---

१ क. घ. °वा संसार। २ ख. इत्यर्थः अ°। ३ ख. ग. °मान्ता अस्य। ४ क. °स्याहमस्मी°। ५ क. ग. °महमस्मी°। ६ क. ख. घ. °वैसं°। ७ ख. ग. घ. °श्वर्यं° त°।

पोभिः समाराध्यरूपेण धर्मप्रदं पापनुदं तेनैव रूपेण पापक्षपयितारम् । भगेशमैश्वर्यस्येतिश्लोकोक्तानामीशमधिपतिम् । आत्मस्थमात्मनि करणसंघाते तत्रापि बुद्धौ तत्प्रत्यग्रूपेण स्थितमात्मत्वेन स्थितमात्मस्थमिति वा । अमृतममरणधर्माणं विश्वधाम सर्पादीनां रज्ज्वादिवद्विश्वस्याऽऽधारभूतं ज्ञात्वाऽहं ब्रह्मास्मीत्यपरोक्षीकृत्य दग्धसंसारतद्बीजो भवतीति वाक्यशेषः ॥ ६ ॥

परमेश्वरस्यैकत्वं तदेकत्वदर्शिनां कृतकृत्यतानुभवं चाऽऽह—तमीश्वराणामिति । तं प्रकृतं परमात्मानमीश्वराणां जगदुत्पत्तिस्थितिलयहेतुभूतानां ब्रह्मविष्णुरुद्राणां परममुत्कृष्टं तेषां महेश्वरं चेश्वराणामपीशितृत्वस्य तदधीनत्वान्महांश्चासावीश्वरश्चेति महेश्वरस्तं महान्तं गरीयांसमीश्वरं नियन्तारं महेश्वरं देवतानामिन्द्रादीनां देवत्वहेतुभूतत्वात्परममुत्कृष्टं दैवतं तेषां दैवतं चैश्वर्यमोक्षसिद्ध्यर्थं भजनीयं तं पतिं स्वामिनं पतीनां समष्टिकार्यकारणोपाधित्वाद्व्यष्टिकार्यकरणोपाधेरस्य सर्वस्य पतीनां हिरण्यगर्भादीनां परमं नियन्तारं परममुत्कृष्टं चापास्ताशेषविशेषानन्तानन्दस्वभावत्वात्परस्तात्प्रकृतेभ्यः परस्तात्तद्रूपं देवमनुदितानस्तमितानन्तचित्प्रकाशरूपं भुवनेशं भुवनानामीशं नियन्तारं निखिलकार्यजातस्येशानमिति वा । ईड्यं वेदेतिहासपुराणैः स्तुत्यं विदाम विद्मः । लडर्थे लोट् । एवंभूतं परमेश्वरमात्मतयाऽपरोक्षीकृत्य वर्तामहे । अतः सर्वपुरुषार्थसमाप्तिरूपमोक्षपुरुषार्थस्य स्वरूपतयाऽऽविर्भूतत्वाद्वयं कृतकृत्यतया वर्तामह इति विद्वदनुभवो दर्शितः ॥ ७ ॥

बिम्बप्रतिबिम्बभेदशून्यमुखमात्रसंबन्धिदर्पणाद्युपाधिस्तस्मिन्मुखे बिम्बप्रतिबिम्बभेदमापाद्य बिम्बमुखं परिहृत्य प्रतिबिम्बपक्षपाती यथा तद्वज्जीवपरभेदशून्यानन्तसुखचिन्मात्रसंबन्ध्यविद्यातत्कार्यकरणोपाधिस्तस्मिन्ननन्तचिन्मात्रे जीवपरभेदमापाद्य प्रतिबिम्बस्थानीयजीवपक्षपाती भवति न बिम्बस्थानीयपरमेश्वरपक्षपातीत्यतोऽनन्तचितः परमार्थतः कार्यकरणशून्यत्वं चाऽऽह—न तस्येति । तस्य परमात्मनः कार्यं समष्टिव्यष्ट्यात्मकं शरीरं करणं च समष्टिव्यष्ट्यात्मकं बाह्यकरणमन्तःकरणं च न विद्यतेऽद्वितीयसुखानुभूतित्वादस्येश्वरस्य न तत्समश्च तेन समस्तत्समश्च तदधिकस्तस्मादधिकश्च न दृश्यते वेदेषु तदनुयायिषु स्मरणेषु स्मरणानुयायिषु न्यायेषु च । ननु परस्यैव कार्यकरणानि

---

१ क. ग. °राधनरू° । २ ख. घ. °द्धौ प्रत्य° । ३ क. घ. °त्मतत्त्वेन । ४ क. घ. °त्वाऽहमस्मी° । ५ ख. ग. घ. °तिप्रत्य° । ६ ग. °त्प्रकृतिप्राक्° । ७ क. घ. °मीशितारं । ८ ख. ग. °रमात्मप° । ९ ख. °मस्तत्समश्च । १० ख. °कस्तदधिकश्च ।

बहुकृत्वः पुराणेषु श्रूयन्त इत्याशङ्क्याऽऽह—पराऽस्य शक्तिर्विविधैव श्रूयत इति । अस्य देवस्य परा मूलप्रकृतित्वेन सर्वव्यापकत्वात्परा शक्तिर्देवात्मशक्तिमित्येवोक्ता विविधाऽनन्तकार्यकरणप्रकृतित्वात्तत्तद्रूपेण विविधा श्रूयते श्रुतिस्मृत्यादिषु । ननु नेति नेतीतिप्रतिषिद्धाशेषविशेषस्य परमेश्वरस्य प्रकृतिप्राकृतरूपं स्वाभाविकं न भवति किं तर्ह्येतद्रूपं स्वाभाविकमित्याह—स्वाभाविकी ज्ञानबलक्रिया चेति । ज्ञानबलक्रिया सर्वज्ञेयविषयसर्वज्ञलक्षणानुभूतिर्ज्ञानक्रिया सा सर्वज्ञेयाकारसर्वसत्त्वगुणपरिणामरूपक्रिययाऽभिव्यक्तत्वात्क्रियावदवभासत इति क्रियेत्युच्यते । सेश्वरस्य स्वरूपत्वात्स्वाभाविकी नान्यायत्तेति यावत् । बलक्रिया नाम स्वसंनिधिमात्रेण प्रकृतिप्राकृतं सर्वं वशीकृत्य नियमयति । सा च सर्वकल्पनाधिष्ठानभूतस्येश्वरस्य स्वाभाविकी नान्यायत्ता । अथवा बलक्रिया बलं नामानन्तसत्ता तया सर्वस्य लब्धात्मकत्वात्सैव धातुवाच्यत्वात्क्रियेत्युच्यते । क्रियाशब्दवाच्यत्वेऽपि नैरपेक्ष्यं सिध्यति । प्रातिपदिकार्थः सत्तेतिवचनात् । अतस्त्यक्तसर्वपरिच्छेदानन्तसत्तेश्वरस्य स्वाभाविकी नान्यायत्ता ॥ ८ ॥

परमेश्वरस्यानन्यपतित्वमीशित्रन्तरशून्यत्वं तर्कागम्यत्वं सर्वकारणत्वं कार्योपाधिकाञ्जीवान्प्रति कारणोपाधितया नियन्तृत्वं चाऽऽह—न तस्य कश्चिदिति । तस्य प्रकृतस्य परमेश्वरस्य कश्चित्कोऽपि पतिः स्वामी नास्ति लोके जगति । न चेशिता नियन्ताऽपि नास्ति । नैव च तस्य लिङ्गमस्ति येनासावनुमीयेत[1] । प्रपञ्चाख्यकार्यदर्शनात्कारणमात्रमेवानुमीयते । न कारणविशेषः । अतः सर्वज्ञं ब्रह्म जगत्कारणमित्यस्यार्थस्य[2] वेदैकसमधिगम्यत्वं नानुमानगम्यत्वमिति यावत् । अथवा कार्यस्यास्मिँल्लीनत्वाल्लिङ्गं कारणं तस्येश्वरस्य कारणमपि नास्ति । स एवंभूतः परमेश्वर एव स्वमायया सर्वस्य जगतः कारणं करणाधिपाधिपः करणानां सर्वेन्द्रियाणामधिपः सर्वेन्द्रियसमष्टिविज्ञानक्रियाशक्तिमद्रूपलिङ्गशरीरोपाधिकत्वाज्जीवः करणाधिपस्तस्यापि मूलप्रकृत्युपाधिक ईश्वरोऽधिपः स्वामी । अथवा करणाधिपश्चासावधिपश्चेति करणाधिपाधिपः । अनन्तसुखानुभूतिवपुः परमेश्वर एव जीवरूपेण स्थितत्वात्तद्रूपेण करणाधिपः अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीतिश्रुत्यन्तरात् । मूलप्रकृत्याख्यमायोपाधिकत्वेन सर्वेषामधिपश्च लोके कारणत्वेन प्रसिद्धानां महदादीनामधिपत्वेन हिरण्यगर्भादीनां च कारणत्वेनाधिपतित्वेनान्यो विद्यते ।

---

१ क. °मीयते । प्र° । २ क. °त्यर्थं° । ३ ख. °नानु° । ४ ख. ग. °नां मृदा° ।

तेनैव दृष्टान्तेन तस्यापीश्वरस्य कारणान्तरमाधिपत्यन्तरं चानुमीयेतेत्याशङ्का-यामाह—न चास्य कश्चिज्जनिता न चाधिप इति । मूलकारणत्वात्स्वायत्त-सिद्धिकत्वादद्वितीयत्वाच्चास्य परमेश्वरस्य कश्चिदपि जनिता जनयिता नास्ति। णिचो लोपो द्रष्टव्यः । न चाधिपोऽस्य परमेश्वरस्याधिपः स्वाम्यपि नास्ति । एवंभूतः परमेश्वरः संसारदुःखमहोदधिं तितीर्षुभिः स्वात्मत्वेन ज्ञातव्य इत्य-भिप्रायः ॥ ९ ॥

इदानीं मन्त्रदृगभिप्रेतार्थप्रार्थनमाह—यस्तन्तुनाभ इति । यो देवः प्रध्वस्ता-खिलभेदः स्वयंप्रकाशवपुरीश्वरस्तन्तुनाभ इव यथोर्णनाभिस्तन्तुभिः स्वशरी-रप्रभवैरात्मानं समावृणोति संछादयति तद्वत्प्रधानजैः सर्वं प्रकर्षेणास्मिन्धीयत इति प्रधानं मायाशक्तिस्तज्जैर्नामरूपकर्मभिस्तन्तुस्थानीयैः स्वभावतोऽपराधीनः स्वतन्त्रः स्वेच्छया द्वैतकल्पनाधिष्ठानभूतं स्वात्मानं स्वयमेव समावृणोति संछादयति । स य एवंभूतः परमेश्वरो नोऽस्माञ्शमदमादिसाधनसंपन्नान्दधातु ददातु धारयतु वा । किं ब्रह्माव्ययं ब्रह्म च तदव्ययं च ब्रह्माव्ययं बृहत्त्वा-द्ब्रह्म कूटस्थनित्यत्वादव्ययम् । एवंभूतं स्वात्मत्वेनेति वाक्यशेषः । ब्रह्माप्य-यमित्यस्मिन्पाठे ब्रह्मण्यप्ययं लयं विद्यया व्यवधायकाविद्यातत्कार्यविलयेनै-कीभावं दधात्वित्यर्थः ॥ १० ॥

परमेश्वरस्य सर्वभूतेषु गूढत्वमन्तर्बहिश्च व्यापकत्वं सर्वेषामन्तरात्मत्वेनाव-स्थितत्वं धर्माधर्मनियन्तृत्वमनन्तानुभूतित्वमद्वितीयत्वं निर्गुणत्वं चाऽऽह—एक इति । । आत्मा जडस्वभाव इति ये वदन्ति तान्निराकरोति—देव इति । देवो द्योतनस्वभावश्चिदेकरस इति यावत् । आत्मनश्चिद्रूपत्वमित्यभ्युपगम्याऽऽ-त्मभेदं ये वदन्ति तान्निराकरोति—एक इति । एकस्मिञ्शरीर एक एवाऽऽ-त्मेत्यभ्युपगमादेक इति पदेनाऽऽत्मभेदपक्षो न निरस्त इत्याशङ्क्याऽऽह—सर्वभूतेष्विति । स्वयंप्रकाशचिदेकरसः सर्वभूतेष्वेकत्वेन वर्तते तथा किमिति न भातीत्यत आह—गूढ इति । सर्वभूतेष्वेकत्वेन स्थितोऽपि तैश्छन्नत्वेन वर्तमा-नत्वात्तथा न भासत इति यावत् । मणिषु सूत्रवत्सर्वभूतादेरेकदेशवर्तित्वेनाऽऽ-त्मनस्तैर्गूढत्वाभ्युपगमे परिच्छिन्नत्वादिदोषाः प्राप्नुयुरित्याशङ्क्याऽऽह—सर्व-व्यापीति । आकाशवत्सर्वमन्तर्बहिश्च व्याप्तुं शीलमस्येति सर्वव्यापी । तर्हि व्याप्य-व्यापकभेदवत्त्वादात्मनः सद्वितीयत्वं प्राप्नोतीत्याशङ्क्याऽऽह—सर्वभूतान्तरा-

---

१ क. घ. °मीयत इत्या° । २ क. घ. °शङ्क्याऽऽह । ३ ख. ग. स यः प° । ४ ख. ग. °शमा° । ५ ख. ग. °त्वेन स्थि° । ६ ख. ग. भायादिल्य° ।

त्मेति । विषधरकलधौतादिषु रज्जुशुक्तिकाशकलादिवत्स्वाविद्याकल्पितत्वेनाध्यात्मादिभेदाभिन्नानां सर्वभूतानामन्तःस्थितः सन्नात्मत्वेन स्वरूपत्वेन वर्तमान इति सर्वभूतान्तरात्मेत्युच्यते । व्याप्यव्यष्टीनां व्यापकात्मस्वरूपव्यतिरेकेण स्वरूपाभावादात्मनः सद्वितीयत्वं न प्राप्नोतीति यावत् । चेतनाचेतनरूपजगद्वैचित्र्यबीजभूतविचित्रपुण्यापुण्यानां स एवाऽऽत्माऽधिष्ठातेत्याह—कर्माध्यक्ष इति । कर्मणामात्मैव प्रवर्तक इति यावत् । यत्प्रसादात्सर्वस्यासुषुप्तता स्यात्स आत्मा द्वैतकल्पनाधिष्ठानत्वेन चच्छन्नश्चेज्जगदान्ध्यप्रसङ्ग इत्याशङ्क्येतरेतराध्यासाभ्युपगमान्नैष दोष इत्याह—सर्वभूताधिवास इति । सर्वेषु भूतेषु वसतीति सर्वभूताधिवासः स्वाविद्यया स्वस्मिन्नारोपितसर्वभूतेषु स्वयमप्यध्यस्ततया वर्तमानत्वाज्जगदान्ध्यदोषप्रसङ्गो नास्तीति यावत् । अवभासकर्तृत्वेनाग्निसंयोगेन कर्पूरगन्धादिवदवभासकश्चेद्विकारित्वजडत्वविनाशित्वादिदोषाः प्राप्नुयुरित्याशङ्क्याऽऽह—साक्षीति । साक्षी साक्षादीक्षत इति साक्षी परिणामव्यवधानमन्तरेण स्वसंनिधिसत्तामात्रेण सर्वमसुप्तत्वेन व्यवहारयोग्यं कुर्वन्नीक्षत इति साक्षी। आदित्यप्रभा सर्वान्प्रकाशयतीति यथा तद्वदतो विकारित्वदोषो न प्राप्नोतीति यावत् । आत्मनः स्वप्रकाशस्वभावत्वं सिद्धं चेदादित्यादिवत्प्रकाशान्तरकर्तृत्वमन्तरेण स्वसंनिधिसत्तामात्रेण सर्वव्यवहारयोग्यं करोतीति सर्वावभासक इति व्यपदेशः स्यान्न त्वेतदस्तीत्याशङ्क्याऽऽह—चेतेति । चेताऽऽन्तरचित्प्रकाशस्वभाव इति यावत् । तर्ह्यात्मा स्वप्रकाशस्वरूपश्चेन्नित्यं ज्ञेयादिसापेक्षत्वान्मोक्षो न भवेदित्याशङ्क्याऽऽह—केवल इति । आत्मचैतन्याभिव्यञ्जिका बुद्धिरेव विषयादिसाधनजन्यत्वाद्विषयादिसापेक्षा । आत्मचैतन्यस्योदयास्तमयादिवर्जितत्वात्सापेक्षता नास्तीत्यतः केवलो विषयादिनिरपेक्षोऽनन्तचित्प्रकाशस्वरूप इति यावत् । स्वयोग्यसर्वविषयशून्ये दिवि यथाऽऽदित्यः प्रकाशते तद्वदित्यर्थः । स्रष्टृत्वव्यापकत्वाध्यक्षत्वपालयितृत्वादिशक्तीनामग्नेर्दहनादिशक्तिवदात्मनः स्वाभाविकत्वान्मोक्षेऽप्यवस्थानात्पुनरपि तत्कार्यस्यापरिहार्यत्वादनिर्मोक्षप्रसङ्गो दुर्वार इत्याशङ्क्याऽऽह—निर्गुणश्चेति । चशब्दः पूर्वविशेषणैः समुच्चयार्थः । आत्मनो नेति नेतीतिप्रतिषिद्धाशेषविशेषानन्तसत्यसुखचिन्मात्रवपुष्ट्वात्स्वतः क्वापि शक्तिर्नास्ति स्रष्टृत्वाद्यनन्तशक्त्याधारमाययैक्याध्यासाच्छक्तिमत्त्वप्रतिभासोऽतो निर्गुण इति यावत् ॥ ११ ॥

---

१ क. घ. 'नस्वरू° । २ ख. ग. °र्तयितेति । ३ क. ग. °नावभा° । ४ क. घ. सर्वं व्य° । ५ ख. ग. इत्यादि व्य° । ६ ख. ग. °न्मोक्षे न भायादि° । ७ क. घ. °तःक्वाऽपि ।

प्राकृतापूर्वकल्पनया[1] हि तत्संस्कारानुगुणतया पुण्यपापबीजानुगुणतया च चेतनाचेतनात्मकप्रपञ्चाकारेण मायाख्यप्रकृतिपरिणामयितृत्वमीश्वरस्येश्वराभेददर्शिनां नित्यपुरुषार्थलाभमितरेषां तदलाभं चाऽऽह—एको वशीति । एकोऽद्वितीयो वशी सर्वमस्य वशे वर्तत इति वशी स्वाधीनसर्व इति यावत् । निष्क्रियाणामचेतनत्वादेव चित्संनिधिव्यतिरेकेण स्वतः सर्वप्रवृत्तिलक्षणक्रियाशून्यानामचेतनानां परमार्थतः कूटस्थानन्तचिदेकरसत्वात्स्वतः सर्वप्रवृत्तिलक्षणक्रियाशून्यानां चेतनानां च बहूनां सर्वेषां च बीजं प्रकृतित्वेन बीजं मायाबिम्बत्वेन बीजं सत्यसुखचिन्मात्रमेकमचेतनानां प्रकृतित्वेन बीजं मायाजाड्य[2]मेकमखण्डं चेतनानां परमार्थतः कूटस्थानन्तचिदेकरसबिम्बत्वेन बीजं सत्यसुखचिन्मात्रमप्येकमखण्डं बहुधा बहुप्रकारं यः करोति । योऽनादौ संसारेऽनेकजन्मसु संचितविहितप्रतिषिद्धविद्याभिर्विहितप्रतिषिद्धकर्मभिश्च प्रेरितो मायोपाधिकः परमेश्वरः स्वैक्याध्यासमुपागतं मायाबीजं महदाद्यनेकाकारं करोति मायैक्याध्यासमुपगतं स्वनिजरूपं चिद्बिम्ब[3]बीजं समष्टिव्यष्टिकार्य[4]करणोपाधिकहिरण्यगर्भाद्यनेकचेतनप्रकारं करोति । तदात्मानं स्वयमकुरुतेतिश्रुत्यन्तरात् । अथवैकः परमेश्वरः प्रलयकाले स्वस्मिन्नेव लीनानां निष्क्रियाणां भोगार्थे[5]मोक्षार्थ[6]क्रियावर्जितानां स्वभूतानां प्राणिनां भोगार्थमोक्षार्थ[7]क्रियासिद्ध्यर्थं चैकमद्वितीयं बीजं कारणं ब्रह्मविष्णुरुद्र[10]पितृमनुष्यादिरूपेण बहुधा करोति तमेवंभूतं परमेश्वरमात्मस्थमात्मनि कार्यकरणसंघाते जीवरूपेणा[11]वस्थितं येऽक्रोधालोभामोहादम्भारागादिसाधना अनुपश्यन्त्यन्वयव्यतिरेकाभ्यां तत्त्वंपदार्थ[12]शोधनमनुसृत्य पश्यन्त्यहमस्मीत्यपरोक्षी कुर्युस्ते धीरा विवेकज्ञानवन्तस्तेषामीश्वरैक्यज्ञानवतां सुखं शाश्वतं नित्यसिद्धं सिध्यति न तथेतरेषामीश्वरैकत्वज्ञानाख्यसाधनहीनानां शाश्वतं सुखं न सिध्यतीत्यहं ब्रह्मास्मीत्येकत्वज्ञानादेव नित्यपुरुषार्थसिद्धिः । उपासनेभ्यः कर्मभ्यो वाऽन्येभ्योऽपि नित्य[13]पुरुषार्थो न सेत्स्यतीत्यर्थः ॥ १२ ॥

परमेश्वरस्य लोके नित्यत्वेन प्रसिद्धानां नित्यत्वहेतुत्वं चेतनत्वेन प्रसिद्धानां चेतनत्वहेतुत्वं कर्मफलदातृत्वं सम्यग्ज्ञानैकलभ्यत्वं तदेकत्वज्ञानान्मोक्षसिद्धिं

---

१ ग. °या विहितसंस्का° । २ क. °याजन्यमे° । ३ ख. °द्बिम्बं बी° । ४ ख. °कार° । ५ क. °र्यकार° । ६ क. °गार्थं मो° । ७ क ख. °क्षार्थं क्रि° । ८ क. ख. घ. °गार्थं मो° । ९ क. ख. घ. °क्षार्थं क्रि° । १० क. ग. °र्यकार° । ११ ख. ग. °पेण स्थि° । १२ ख. ग. °र्थमनुशो° । १३ ख. ग. °त्यसुखार्थो ।

चाऽऽह–नित्य इति। नित्यानां लोके नित्यत्वेन प्रसिद्धानामाकाशादीनां नित्यो नित्यत्वे हेतुस्तन्नित्यत्वेन तेषां नित्यत्वप्रतीतिरिति यावत्। नित्यत्वेन प्रतिपन्नानां मध्ये साक्षान्नित्य इति वा। चेतनश्चेतनानां लोके चेतनत्वेन प्रतिपन्नानां प्रमात्रादीनां चेतनः। तमृते न तेषां चेतनत्वप्रतीतिरिति यावत्। चेतनत्वेन प्रतिपन्नानां मध्येऽयं साक्षाच्चेतन इति वा। नित्यत्वेन चेतनत्वेन च प्रतिपन्नानामयं नित्यश्चेतनश्चेत्ये[1]कोऽन्वयो वा। अतोऽन्यदार्तं नान्यो[2]ऽस्ति द्रष्टा[3] नान्योऽस्ति श्रोतेतिश्रुत्यन्तरात्। एकोऽद्वितीयो बहूनां ब्रह्मादिपिपीलिकान्तानां योऽखण्डसुखसंविद्रूपः परमेश्वरो विदधाति प्रयच्छति करोति वा। कामान्काम्यन्त इति कामाः सुखप्रतिबि[4]म्बानि तानि पुण्यानुगुणतया विदधाति तद्ब्रह्म कारणं जगतः कारणं सांख्ययोगाधिगम्यं सांख्यं च योगश्च सांख्ययोगौ सांख्यं वेदान्तमहावाक्यतात्पर्यजन्यमहं ब्रह्मास्मीतिसम्यग्ज्ञानं योगस्तत्साधनश्रवणमननिदिध्यासनादिस्ताभ्यां सांख्ययोगाभ्यामधिगम्यं प्राप्यं ज्ञातव्यं देवं बोधैकरसं ज्ञात्वाऽहमेवास्मीत्यपरोक्षीकृत्य मुच्यते सर्वपाशैरविद्याकामकर्माख्यैः सर्वैः पाशैर्मुच्यत ईश्वरापरोक्षाद्बाधितसंसारतद्बीजो भवतीत्यर्थः॥ १३॥

परमेश्वरस्याऽऽदित्यादिप्रकाशैरप्रकाश्यत्वमादित्यादिप्रकाशानां समस्तजगतां चावभासकत्वं चाऽऽह—न तत्रेति। न तत्र प्रकृते परमात्मनि सर्वावभासकोऽपि सूर्यो भाति तद्ब्रह्म न प्रकाशयति सर्वागोचरत्वात्सर्वेषामात्मत्वाद्रूपादिहीनत्वाच्च स हि तदधीनप्रकाशः स्वयोग्यं सर्वं प्रकाशयति न तु स्वमहिमत इतोऽपि च न त[5]त्र भासते तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्गोचरोऽग्निः। यत्र सू[6]र्यादिर्न भाति तत्र का वार्ताऽस्मद्गोचरस्याग्नेरित्यर्थः। तमेव भान्तं स्वतो भारूपत्वात्प्रत्यक्षादिप्रमाणानपेक्षतया स्वयमेव भान्तं सर्वजगदवभासात्पूर्वमेव दीप्यमानमनुभाति। सर्वमनु तेनैक्याध्यासमनुसृत्य भानाभासं लब्ध्वा भाति सर्वमादित्यादिकं पूर्वोक्तं किं परिमितोक्त्या तस्य परमेश्वरस्य भासा स्वरूपभूतचैतन्यप्रकाशेन सर्वमिदं जगद्विभाति प्रकाशते॥ १४॥

परमेश्वरस्य द्वैतभ्रमबाधकत्वं प्रत्यक्त्वेनावस्थितत्वं तदैक्यज्ञानमेव मोक्षप्राप्तिमार्गो नान्यो मार्गोऽस्तीत्येतदाह—एक इति। एकोऽद्वितीयो हंसः स्थित्यवस्थां याति तामपि हत्वा स्वप्नावस्थां याति पुनस्तामपि हत्वा सुषुप्त्यव-

१ ख. °त्येकान्व°। २ ख. ग. °न्योऽतोऽस्ति। ३ ख. ग. घ. नान्यदतोऽस्ति द्रष्टृिति°। ४ ग. °विम्बितानि। ५ ख. ग. तत्राऽऽभा°। ६ ख. सूर्यो न भा°।

स्थां याति तामपि हत्वा पुनरहं ब्रह्मास्मीतिसम्यग्ज्ञानफलकारूढः स्वव्यवधायकद्वैतभ्रमहेत्वविद्यां हत्वा प्रत्यक्त्वं यातीति हंसो भुवनस्यास्य मध्येऽयमेव हंसो नान्यः कश्चिदस्तीति वाऽर्थः । स एवाग्निः स एव परमेश्वरोऽग्निरग्निरिवाग्निः काष्ठावयवैस्तिरस्कृततया काष्ठानुगतोऽग्निर्मथनेनाभिव्यक्तः सन्स्वतिरस्कारककाष्ठावयवान्दग्ध्वा स्वनिजवपुषाऽवस्थितो यथा तद्वदविद्यातत्कार्यैस्तिरस्कृततयाऽविद्यातत्कार्येष्वनुगतः परमेश्वर उत्तराधरारणिस्थानीयगुरुशिष्ययोः संघर्षणरूपमथनस्थानीयश्रवणमननादिजन्यसम्यग्ज्ञानफलकारूढः सन्स्वतिरस्कारकाविद्यातत्कार्याणि स्वतावन्मात्रतया दग्ध्वाऽद्वितीयवपुषा मोक्षेऽवतिष्ठत इत्यग्निरित्युच्यते । सलिले संनिविष्टः सम्यङ्निविष्टस्तेषां स्वरूपस्फुरणप्रदत्वेन संनिविष्टस्तमेव प्रकृतिप्राकृतैरसंस्पृष्टं प्रकृतं परमेश्वरं विदित्वा स्वात्मतयाऽपरोक्षीकृत्य तं विदित्वैवाति मृत्युमेति मृत्युं जननमरणसंसारहेतुभूतमविद्यातमआख्यं मृत्युमत्येति तरति सम्यग्ज्ञानेन चिन्मात्रतया नाशयतीत्यर्थः । पापमत्येतीतियावत् । अथवा संसारतद्धेतुलक्षणं मृत्युमत्यतीत्य सम्यग्ज्ञानेन दग्ध्वा तदधिष्ठानभूतमपास्तातिशयं परमानन्दमेति नान्यः पन्था अस्माज्ज्ञानादन्यः पन्था मार्गो न विद्यतेऽयनाय मोक्षप्राप्तये ॥ १९ ॥

परमसूक्ष्मपरमार्थोपदेशे[1] ग्रन्थलाघवाद्बुद्धिलाघवमेवाऽऽश्रयितव्यमिति मत्वा पुनरपि तमेवार्थविशेषं विशेषतो दर्शयति कथं नु नामेममर्थं प्रतिपद्येरन्निति—स विश्वकृदिति । स प्रकृतः परमात्मा विश्वकृद्विश्वं स्वमायया करोतीति विश्वकृत् । विश्वविद्विश्वमपरोक्षतया वेत्तीति विश्ववित् । आत्मयोनिरात्मैव स्वयमेव सर्वस्य योनिर्न स ह कार्यान्तरमपेक्षते । अथवाऽऽत्मनां योनिरात्मयोनिः सुरनरतिर्यक्शरीराणामात्मनां योनिः कारणं पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पद इति श्रुत्यन्तरात् । अथवाऽऽत्मा च स एव योनिश्चेत्यात्मयोनिस्त्वंपदार्थभूतप्रत्यगात्मत्वेन तत्पदार्थभूतजगत्कारणत्वेन स एव स्थित इति यावत् । ज्ञश्चित्स्वरूपः कालकालः कालस्य सर्वोपसंहर्तुरपि काल उपसंहर्ता गुणी मायाशक्त्याख्यगुणकोऽपहतपाप्मत्वादिगुणको वा । सर्वविद्यः सर्वा विद्या अस्येति सर्वविद्यस्तस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवतीति सर्वविद्यः प्रधानक्षेत्रज्ञपतिः प्रधानश्चासौ क्षेत्रज्ञश्चेति प्रधानक्षेत्रज्ञः स एव पतिश्चेति प्रधानक्षेत्रज्ञपतिः सर्वस्माच्छ्रेष्ठः प्रधानक्षेत्रज्ञः प्रकृतिप्राकृतलक्षणं क्षेत्रं जानातीति क्षेत्रज्ञः पतिः सर्वस्य स्वामी । अथवा प्रधानक्षेत्रज्ञयोः पतिः प्रधानक्षेत्रज्ञपतिः प्रधानस्य स्वरूपप्रदतयाऽधिष्ठानत्वेन पतिः क्षेत्रज्ञस्य बिम्बतया पतिः स एष इह प्रविष्ट

१ क. घ. °देशग्र° ।

इति श्रुत्यन्तरात् । गुणेशः सत्त्वरजस्तमसां नियामकः संसारमोक्षस्थितिबन्धहेतुः सम्यग्ज्ञाततया संसारान्मोक्षस्य हेतुः संसारहेतुनाऽज्ञानेनाज्ञाततया तस्मिन्संसारे स्थितिलक्षणबन्धस्य हेतुः कारणम् ॥ १६ ॥

परमेश्वरस्य स्वमहिमप्रतिष्ठां कर्मादिसाधननिरपेक्षितत्वं चाऽऽह—स तन्मय इति । स प्रकृतः परमेश्वरस्तन्मयोऽज्ञाततया ज्ञातया च बन्धमोक्षहेतुमयो हेतुरूपः[1] । स्वार्थे मयट् । हि प्रसिद्धौ । अमृतोऽमरणधर्मा । ईशसंस्थ ईश्वरत्वेन सम्यगवस्थितः । अथवेशे स्वमहिम्नि संस्था सम्यक्स्थितिर्यस्य स ईशसंस्थः । ज्ञश्चित्प्रकाशकः[2] । सर्वगः सर्वसाक्षित्वेन सर्वं गच्छतीति सर्वगः । भुवनस्य भुवनधर्मयुक्तस्य दृश्यप्रपञ्चस्यास्य गोप्ताऽऽनन्दप्रदत्वेन पालयिता यः स्वयंप्रकाशानन्दानुभव ईश ईष्टेऽस्य जगतो नित्यमेव नियमेनैवोत्पत्तिस्थितिप्रलयावस्थासु । न हिरण्यगर्भादिवत्कर्मोपासनजन्यमस्यैश्वर्यमपि तु सहजासिद्धमस्यैश्वर्यमित्याह—नान्यो हेतुर्विद्यत ईशनायेति । अथवा जगदीशनाय स एव परमेश्वरो हेतुर्नान्यो हेतुर्विद्यते । सर्वत्रेशनक्रियायाः स एव कर्ता नान्यः कर्ता विद्यत इति यावत् ॥ १७ ॥

यस्मात्परमेश्वर एव मुमुक्षोः सम्यग्ज्ञान[3] आत्मतयाऽभिव्यक्तः सन्मोक्षहेतुस्तस्मान्मोक्षसिद्धयर्थं मुमुक्षोरीश्वरं प्रति शरणतया प्राप्तिमाह—यो ब्रह्माणमिति । निःसङ्गसुखबोधवपुर्यः परमेश्वरो ब्रह्माणं सर्वजीवसमष्टिरूपं हिरण्यगर्भं विदधात्यवान्तरसर्गस्थित्यन्तकर्तृत्वेन स्वमायया विदधाति ससर्ज सृष्टवान्पूर्वं सर्गादौ यः परमेश्वरो वै प्रसिद्धौ वेदांश्च प्रहिणोति प्रददौ तस्मै तस्मात्प्रथमं हिरण्यगर्भाय महाप्रलये विच्छिन्नसंप्रदायानां वेदानां तस्मादितराधिकारिषु संप्रदायसिद्धयर्थं परमेश्वरस्तस्मै वेदान्प्रददौ । तमेवंभूतम् । ह एवार्थे । तेमव देवं ज्ञानस्वभावात्मबुद्धिप्रसादं स्वविषयबुद्धिप्रसादकरं प्रत्यगात्मानं निर्मलान्तःकरणोपहिते तत्कर्तृकत्वेन स्थिता या बुद्धिस्तस्याः स्वाभाविक्याः प्रसादयितारं वा । आत्मबुद्धिप्रकाशमित्यस्मिन्पाठ आत्मबुद्धिमहं ब्रह्मास्मीति स्वविषयां बुद्धिं प्रकाशयतीत्यात्मबुद्धिप्रकाशम् । अथवाऽऽत्मैव बुद्धिरात्मबुद्धिः । बुद्धिर्नाम ज्ञानं[4] स्वरूपानुभवः[5] स एव प्रकाशोऽस्येत्यात्मबुद्धिप्रकाशस्तमात्मबुद्धिप्रकाशमित्येवं योजयितव्यम् । मुमुक्षुर्वै वै प्रसिद्धं मुमुक्षुत्वाद्यधि-

---

१ ख. ग. °पः । स्वरूपार्थे । २ क. ग. घ. °काशः । स° । ३ क. °ग्ज्ञानेनाऽऽत्म° । ४ ख. ज्ञानस्व° । ५ ख. ग. °रूपमनु° ।

कारसंपत्तिर्मेऽनुभवसिद्धेति यावत् । शरणमहं प्रपद्ये मुमुक्षुरहं मोक्षसिद्ध्यर्थं शरणं प्रपद्ये ॥ १८ ॥

परमेश्वरस्य देशतः कालतो वस्तुतश्चानवच्छिन्नत्वमधिकारित्वं निःसङ्गत्वं सत्यसुखचिन्मात्रैकरसत्वं[1] प्रत्यक्त्वेनावस्थानं स्वेनैक्याध्यासमुपगतस्वमायया सर्वज्ञत्वं समस्तजगदुदयस्थितिप्रलयहेतुत्वं सर्वान्तर्यामिरूपेणावस्थितत्वं मुमुक्षोरीश्वरैकत्वापरोक्ष्याद्द्वैत[2]भ्रमस्य स्वरूपमात्रतया प्रलीनत्वमीश्वरैकत्वज्ञानादेव मोक्षसिद्धिमन्येभ्यस्तदसिद्धिं च पदे पदे महता परिकरबन्धेन तात्पर्येण प्रतिपाद्येममेवार्थं संक्षिप्योपसंहरति मन्त्रद्वयेन—निष्कलमिति । किं केवलावयविनः परिणामित्वमवयवविशिष्टस्यावयविनो वा परिणामित्वमवयविद्रव्यस्य चेन्निरं[3]शस्यापि[4] परिणामित्वापातः । अवयवविशिष्टस्य चेत्तदाऽपि निरंशस्य परिणामित्वापातः । अवयवैरारभ्यावयविनि वर्तमानस्य परिणामस्य तत्तदवयवविशिष्टेऽवयविनि वर्तमानत्वमङ्गीकृतं चेत्तदवयवरूपेऽवयविनि वर्तमानत्वं वर्तमानस्य परिणामस्य तत्तदवयवविशिष्टा[5]वयवलक्षणेऽवयविनि वर्तमानत्वं स्यात्ततोऽन्त्यावयवरूपपरमाणुषु वर्तमानत्वस्यै[6]ष्टव्यत्वादुभयथा निरंशस्यैव परिणामित्वस्याङ्गीकर्तव्यत्वाद्ब्रह्मणो निरंशत्वेऽपि महदादिरूपेण परिणामित्वं स्यादित्याशङ्क्यावयविनः परिणामित्वेऽवयवस्य विशेषणत्वेनोपकारकत्वाभावादुक्तदोषप्राप्तिः[7] । उपाधित्वेनोपकारकत्व[8] उपाधिभूतावयवसंबन्धाभावाद्ब्रह्मणः परिणामित्वं[9] न[10] संभवतीत्याह—निष्कलं निष्क्रियमिति । कला अवयवा अस्य न विद्यन्त इति निष्कलमिति[11] परिणामोपाध्यभाव उक्तः । निष्क्रियमिति तदुपाधिक[12]परिणामक्रियाभाव उक्तः । ब्रह्मणः परिणामक्रियाभावात्तत्फलभूतकार्यात्मकत्वं नास्तीत्याह—शान्तमिति । देहादिपरिणामि वस्तु पूर्वावस्थां परित्यज्योत्तरावस्थां याति तामपि परित्यज्य तत उत्तरावस्थां याति । एवं सर्वदा व्यापृततया वर्तते तद्वद्ब्रह्मणः सर्वदा व्यापृतत्वं नास्तीति भावः । परिणामित्वे जडत्वं प्रयोजकं चेच्चित्त्वं न स्याच्चित्त्वं प्रयोजकं चेज्जडत्वं न स्यादेवमन्योन्यव्यभिचारादुभयस्य प्रयोजकत्वासंभवादेकस्यैव प्रयोजकत्वमङ्गीकर्तव्यं तत्रोभयवादिसंप्रतिपन्नजडस्यैव परिणामित्वस्याङ्गीकर्तव्यत्वा[13]त्तद्रूपत्वाभावाद्ब्रह्मणः परिणामित्वं न संभवतीत्याह—निरवद्यमिति । निर्दोषरूपत्वादेव जडरूपत्वं ब्रह्मणि नास्तीति यावत् । शक्तस्य सहकारिसाधनसंयु-

१ ख. ग. घ. °खसंविन्मा° । २ क. °रोक्षत्वं द्वैत° । ३ ख. ग. °चेत्तदा निर° । ४ ख. °शस्यैव प° । ५ ग. °शिष्टेऽव° । ६ क. ख. घ. °नस्यै° । ७ क. ग. घ. °दोषाप्रा° । ८ ख. ग. °धिकत्वे° । ९ क. घ. °रत्व । १० ख. न भ° । ११ ख. °लमस्य निष्कलमि° । १२ ख. ग. °धिप° । १३ ग. °त्वादुभयत्वा° ।

क्तस्यैव परिणामित्वं दृष्टम् । इह तु शक्तिसहकारिसंबन्धोऽपि नास्तीत्याह—निरञ्जनमिति । अमृतस्य परं सेतुममृतस्य संसारतद्धेतुनिवृत्तिलक्षणमोक्षस्य परं परमं सेतुं सेतुरिव सेतुस्तमहं ब्रह्मास्मीतिबुद्धौ प्रतिबिम्बितत्वेन बुद्धिसंस्पृष्टं[1] तत्त्वमविद्यातत्कार्यनिवृत्तिशब्दवाच्यतया निवृत्तिस्वरूपं सत्सेतुर्भवति । बुद्धिसंबन्धोपलक्षितं जीवपरैक्यं तत्त्वं स्वतिरस्कारकाविद्यातन्मूलं द्वैतप्रपञ्चं स्वतावन्मात्रतया दग्ध्वाऽनन्तसुखचिन्मात्रतया मोक्षेऽवस्थितमिति दग्धेन्धनानलमिवेत्युच्यते ॥ १९ ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । यदा यथा चर्म वेष्टयिष्यन्ति मानवास्तद्वदाकाशं वेष्टयिष्यन्ति मानवास्तदा देवं पूर्वश्लोकोक्तं निष्कलत्वादिविशेषणविशिष्टं देवमविज्ञायाऽऽत्मत्वेनाज्ञात्वा दुःखस्य सकारणसंसारदुःखस्यान्तो नाशो भविष्यति । तस्माद्देवमविज्ञाय संसारदुःखनिवृत्तिः सर्वथा न संभाव्यत इत्यर्थः । शिवमविज्ञायेत्यस्मिन्पाठे ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्युक्तत्वात्प्रकृतिप्राकृतमलैरनास्कन्दितस्वरूपं[2] शिवमविज्ञायेत्यर्थः ॥ २० ॥

संप्रदायपरम्परयाऽऽगताया एव विद्याया मोक्षफलपर्यन्तत्वं दर्शयितुं संप्रदायं विद्याधिकारिणं चाऽऽह—तपःप्रभावादिति । तपःप्रभावात्तपसः कृच्छ्रचान्द्रायणादिलक्षणस्य तत्र तपःशब्दस्य रूढत्वादनेकजन्मार्जितस्याऽऽश्रमप्रयुक्ततया विहितस्य कर्माख्यस्य तपसो नियमेषु तपःशब्द इति तत्र तपःशब्दस्मरणादिन्द्रियमनसोरैकाग्र्यलक्षणस्य तपसो मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इतिस्मरणात्तपःशब्दभूतानामेतेषां प्रभवात्सामर्थ्याद्देवप्रसादाच्च मोक्षाधिकारसिद्ध्यर्थमनेकजन्मसूपार्जितपरमेश्वरस्य प्रसादाच्च ब्रह्म ह ब्रह्माद्वितीयं तत्त्वं हशब्द ऐतिह्यं द्योतयति । श्वेताश्वतरो नाम ऋषिर्विद्वान्पूर्वोक्तं ब्रह्म विद्वान्स्वात्मत्वेनापरोक्षीकृतब्रह्मतत्त्वमथ शिष्येषु साधनचतुष्टयसंपत्तिमालक्ष्यानन्तरमत्याश्रमिभ्य इति । अतिः पूजायामिति स्मरणादत्याश्रमः संन्यासाश्रमस्तत्रापि परमहंसाश्रमः । तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयन्न्यास इति ब्रह्मेतिश्रुतेः । “ चतुर्विधा भिक्षवश्च कुटीचकबहूदकौ । हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ” इति स्मरणाच्च । य एतेषां मध्येऽत्याश्रमिणस्तेभ्योऽत्याश्रमिभ्यः परमं यत्पूर्वोक्तं ब्रह्म तदेव परममुत्कृष्टमपास्तातिशयानन्दं पवित्रं शुद्धं प्रकृतिप्राकृताख्यैर्मलैरनास्कन्दितमृषिसंघजुष्टमृषीणां सनकसनन्दनवामदेवप्रभृतीनां संघैर्जुष्टं सेवितं तेषां प्रीतं च सम्यक्सेवितमात्मत्वेन प्रीतं चेति यावत् । प्रोवाच सम्यगित्यस्य काकाक्षिन्यायेन संबन्धः । तेभ्य एवंभूतं

१ ख. घ. °संसृष्टं । २ घ. °न्तसत्यस्व° ।

ब्रह्म सम्यक्प्रोवाचाऽऽत्मत्वेनापरोक्षीकृतं यथा भवति तथा प्रोवाचेत्यर्थः । प्रोवाचेतिप्रशब्देन गुरोरुपदेशकौशलं दर्शयति ॥ २१ ॥

वेदान्त इति । वेदान्ते सर्वासूपनिषत्सु जातावेकवचनम् । परमं परमपुरुषार्थरूपं गुह्यं गोपनीयं गुह्यरूपेण स्थितं पुराकल्पप्रचोदितं पुरा कल्परूपेण प्रचोदितं पूर्वस्मिन्कल्पे प्रचोदितमुपदिष्टमिति वा संप्रदायपरम्परया सम्यग्ज्ञातमिति यावत् । कल्पादौ हिरण्यगर्भाय प्रचोदितमुपदिष्टमिति वा । नाप्रशान्ताय शमदमाद्यधिकारसंपत्तिरहिताय न दातव्यं तत्रापि नापुत्राय वाऽशिष्याय वा न दातव्यं प्रशान्तचित्ताय पुत्रायं प्रशान्तचिरप्रोषितशिष्यायं च दातव्यमित्यर्थः ॥ २२ ॥

देवतागुरुविषयनिरुपाधिकभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वमाह—यस्य देव इति । यस्य पुरुषस्य देवे परमेश्वरे परोत्कृष्टा निरुपाधिका भक्तिर्यथा तथा निरुपाधिका भक्तिरेव गुरावपि विद्यते गुरुदेवतयोरेकत्वबुद्ध्या तस्य देवतागुरुविषयनिरुपाधिकभक्तिमतो योग्याधिकारिण एते कथिता अस्यामुपनिषदि भगवता श्वेताश्वतरेण कथिता उपदिष्टा हि यस्मादर्थाः प्रकाशन्ते यथावत्प्रकाशन्ते महात्मनो महानुभावस्य नान्यस्येति यस्मात्तस्माद्विद्यार्थिभिर्देवतागुरुविषया निरुपाधिका भक्तिः कर्तव्येत्यभिप्रायः । द्विर्वचनमध्यायपरिसमाप्तिद्योतनार्थमादरार्थं च ॥ २३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपाद-
शिष्यस्य विज्ञानभगवतः कृतौ श्वेताश्वतरोपनि-
षद्विवरणे षष्ठोऽध्यायः ॥ ६ ॥

समाप्तिमगमदिदं विज्ञानभगवत्कृतं श्वेताश्वतरो-
पनिषद्विवरणम् ।



१ क. ख. घ. °कृत्य य° । २ क. ख. °ज्ञानमि° । ३ ख. ग. °न्तपु° । ४ क. घ. °य शि° । ५ ख. ग. °य वा दा° । ६ क. ख. घ. °भक्त्योर्वि° ।

| ग्रन्थनाम् । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... .... | ३ | १९ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... .... .... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । .... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । .... ... .... | ३ | ४ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २९ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । " " .... | ० | १२ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभागम् । | ८ | ९ |
| १०२ ब्रह्मवैवर्तपुराणम्— भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | ९ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकरादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ९ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ९७ | आचारभूषणम् | ४ | ६ |
| ९८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ९ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत् (शां०) | ५ | ० |
| ६३ | छान्दोग्योपनिषत्(रामा०) | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा० स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ४ |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |

| ग्रन्थाङ्काः | मूल्यम् रू० | आ० |
|---|---|---|
| १०० प्रायश्चित्तेन्दुशेखरः | १ | १० |
| १५ बृहदारण्यकोपनिषत् | ८ | ० |
| ३४ ,, (रामानुजटी०) | ३ | ४ |
| ३१ ,, ( मिताक्षरा ) | २ | १२ |
| १६ बृहदारण्यकोपनिषद्भा० | २२ | ८ |
| ७१ बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ ब्रह्मपुराणम् | ६ | ४ |
| १०२ ब्रह्मवैवर्तपुराणम् (भा०२) | ९ | ४ |
| २१ ब्रह्मसूत्राणि ( शां० ) | १२ | ० |
| ६७ ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ ब्रह्मसूत्रवृत्तिः | २ | ७ |
| ३४ भगवद्गीता (शां० भा०) | २ | ० |
| ३४ ,, ( सटीकशां०भा० ) | ६ | ४ |
| ४४ ,, ( पैशाचभाष्य० ) | १ | ८ |
| ४५ ,, (मधुसूदनीश्रीधरीटी० | ५ | ४ |
| ९२ ,, ( रामानुजीया ) | ७ | ८ |
| ९९ भास्करीयबीजगणि.सटी. | २ | ० |
| ७५ भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ मत्स्यपुराणम् | ६ | ० |
| १० माण्डूक्योपनिषत् | २ | ५ |
| ९७ मीमांसादर्शनम् | २५ | ९ |
| ९ मुण्डकोपानिषत् | ० | १० |
| ६० यतिधर्मसंग्रहः | १ | १२ |
| ५० यतीन्द्रमतदीपिका | १ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः | १३ | ० |
| ४ योगरत्नाकरः | ५ | ० |
| १९ रसरत्नसमुच्चयः | ३ | १२ |

| ग्रन्थाङ्काः | मूल्यम् रू० | आ० |
|---|---|---|
| २ रुद्राध्यायः | १ | ६ |
| ८० वाक्यवृत्तिः | ० | ८ |
| ८९ वायुपुराणम् | ४ | १२ |
| ८६ विधानमाला | ४ | ४ |
| २७ वृन्दमाधवः | ६ | १२ |
| ७७ वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ वैयासकन्यायमालाविस्तरः | १ | १२ |
| २२ श्रीमच्छंकरदिग्विजयः | ६ | ० |
| १०१ शांकरपादभूषणम् | ८ | ५ |
| ६५ शाङ्खायनब्राह्मणम् | १ | ४ |
| ९० शाङ्खायनारण्यकम् | ० | ९ |
| शिवभारतम् | १ | ५ |
| ९९ श्राद्धमञ्जरी | २ | ० |
| १७ श्वेताश्वतरोपनिषत् | २ | ४ |
| ९४ संस्कारपद्धतिः | २ | ८ |
| ८३ संक्षेपशारीरकम् | ९ | १ |
| ३५ संगीतरत्नाकरः | १० | ४ |
| ५३ सत्याषाढश्रौतसूत्रम् | २८ | ५ |
| ५१ सर्वदर्शनसंग्रहः | २ | ० |
| ४० संध्याभाष्यसमुच्चयः | २ | ० |
| ३९ संस्काररत्नमाला | १२ | ८ |
| सिद्धान्तदर्शनम् | १ | ४ |
| २५ सूतसंहिता | ११ | ८ |
| १८ सौरपुराणम् | ६ | ० |
| ४८ स्मृतीनां समुच्चयः | ५ | ० |
| ७० स्मृत्यर्थसारः | १ | १० |
| २६ हस्त्यायुर्वेदः | ७ | ६ |